आयुर्वेदीयग्रन्थमाला ।

चतुर्थं पुष्पम् ।



श्रीभोजमहाराजविरचितो

# राजमार्तण्डः ।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः प्रकाशितश्च ।

द्वितीयं संस्करणम् ।

सन १९२४.

AYURVEDIYA GRANTHAMALA.

No. 4.

# RAJAMARTANDA

BY

MAHARAAJA BHOJA.

EDITED AND PUBLISHED

BY

VAIDYA JADAVJI TRICUMJI ACHARYA,

No. 18, BORA BAZAR STREET, FORT, BOMBAY.

1924 A. D.

# भूमिका.

'राजमार्तण्ड' इति नाम्ना प्रसिद्धो नानारोगोन्मूलनक्षमविविधयोगसंग्रहात्मकोऽयं ग्रन्थः श्रीभोजनृपविरचित इति एतद्ग्रन्थस्यान्तिमपद्यात् प्रतीयते। सोऽयं भोजनृपो मालवदेशाधिपतिरनेकविद्वद्रत्नमण्डितसभामण्डपो विद्यैकविलासीतिहासप्रसिद्धो भोजमहाराज एवेति स्वेनैव द्वितीये श्लोके कथितात् 'नृपतिशतशिरोधिष्ठिताङ्घ्रेन' इति पदात्, तथा अन्तिमश्लोकस्थात् 'समस्तपाथोनिधिवीचिसंचयप्रवर्तितान्दोलनकेलिकीर्तिना' इति पदात्, तथा अस्मिन् ग्रन्थे समुपलभ्यमानात् काव्यरचनाचातुर्याच्चानुमीयते। प्रमारवंशोद्भूता भोजनामानस्त्रयो राजानो भिन्नभिन्नसमये मालवदेशलंचक्रुः। तत्र प्रथमः त्रिंशत्यधिकषट्शततमे विक्रमाब्दे, द्वितीयो विंशत्यधिकसप्तशततमे विक्रमाब्दे, तृतीयश्च एकादशशततमे विक्रमाब्दे, राज्यारूढ आसीदितीतिवृत्तविदां मतम्। त्रयोऽपि प्रसिद्धाः पराक्रमशालिनो विद्याविलासिनश्च। तेषु कतमोऽयं राजमार्तण्डप्रणेता भोज इति निर्णेतुं न किञ्चिदपि साधनमुपलभे। अस्मिन् ग्रन्थे चतुस्त्रिंशदधिकारा अष्टादशाधिकचतुःशतश्लोकेषूपनिबद्धाः सन्ति। तत्र चाल्पैरौषधैरल्पेनायासेन साध्या भूरिगुणाश्च योगा उक्ताः। ग्रन्थश्चायं ललितविविधवृत्तोपनिबद्धत्वात् भिषजां कण्ठोपस्थितिकरणयोग्यः। ग्रन्थस्यास्य संशोधनार्थं आदर्शपुस्तकद्वयमुपलब्धम्। एकं मदीयपरमसुहृदां बुन्दीनगरीनिवासिनां **राजवैद्यश्रीप्रसादशर्मणां**, अपरं च मदीयसुहृदां वटोदर (वडोदरा-बडोदा) पत्तननिवासिनां स्वर्गवासिनां **'वैद्य विनायक सदाशिव आम्बेकर'** इत्येतेषाम्। पाठान्तरदाने चैतयोराद्यस्य **क.** इति द्वितीयस्य च **ख.** इति संज्ञा स्थापिता। ग्रन्थस्यास्य संशोधने यथामत्यनुष्ठितो यत्नः। तथाऽपि मानवस्वभावसहनिबद्धाद्भ्रमप्रमादादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेद्गुणैकपक्षपातिभिर्विद्वद्भिः संशोधनीयं संवेदनीयश्चाहं, सफलयितव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनप्रयोगादिनेति सविनयमभ्यर्थ्यते

भिषजामनुग्राह्यो—

**यादवशर्मा.**

# राजमार्तण्डान्तर्गतविषयानुक्रमणिका ।



# राजमार्तण्डस्य पाठसंशोधनम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| [illegible]नाः | घनाः | २ | ९ |
| ०भिधाम् | ०भिधानम् | ११ | २७ |
| ०संघातिका० | ०संघातिका० | ३४ | १० |
| अग्निदग्दाधिकारः | अग्निदग्धाधिकारः | ३५ | १ |
| [illegible]ातकोत्थ० | भल्लातकोत्थ० | ३६ | १ |
| [illegible]विंशतितमः | षड्विंशतितमः | ,, | ४ |
| लज्जालु० | लज्जालु० | ,, | १७ |
| कालजङ्घा० | काकजङ्घा० | ,, | १९ |
| आर्द्रेण | आर्द्रेण | ,, | २३ |



श्री भोजराजविरचितो

# राजमार्तण्डाख्यो योगसंग्रहः ।

## अथ शिरोरोगाधिकारः प्रथमः ।

मङ्गलाचरणम् ।

नीलस्निग्धगिरीन्द्रजालकलतासंबन्धबद्धस्पृह-
श्चन्द्रांशुद्युतिशुभ्रदंष्ट्रवदनः प्रोत्सर्पदुग्रध्वनिः ।
लीलोदस्तकरप्रहारदलितोद्दामद्विपेन्द्रः श्रियं
दिश्याद्वोऽग्निशिखापिशङ्गनयनश्चण्डीशपञ्चाननः ॥१॥

दृष्ट्वा रोगैः समग्रैर्जनमवशमिमं सर्वतः पीड्यमानं
योगानां संग्रहोऽयं नृपतिशतशिरोधिष्ठिताज्ञेन राज्ञा ।
कारुण्यात्सन्निबद्धः स्फुटपदपदवीसुन्दरोद्दामबन्धै-
र्वृत्तैरुद्धृत्तशत्रुप्रमथनपटुना राजमार्तण्डनामा ॥ २ ॥

खालित्ये भृङ्गराजादितैलम् ।

भृङ्गरजपक्वतैलं द्विपदशनामलकक्कृतमषीमिश्रम् ।
खलतेरपि चिकुरचयं जनयत्यभ्यङ्गयोगेन ॥ ३ ॥

खालित्ये हस्तिदन्ताद्यो लेपः ।

द्विपदशनः पुटदग्धः साजक्षीरो रसाञ्जनोपेतः ।
दिनसप्तकप्रलेपात् खलतेर[illegible] केशसंजननः ॥ ४ ॥

---

१ 'वृत्तैरुद्धृत्य शत्रुप्रमथनपटुना' ख. । २ 'भृङ्गारकपक्वतैलं' ख. ।

खालित्ये गुञ्जाद्यं तैलम् ।

मार्कवस्वरसभावितगुञ्जाबीजचूर्णपरिपाचिततैलम् ।
मिश्रितं त्रुटिजटामरकुष्ठैः केशभारजननं वनितायाः[1] ॥५॥

इन्द्रलुप्ते भल्लातकाद्यो लेपः ।

भल्लातकैर्वा बृहतीफलैर्वा सुश्लक्ष्णपिष्टै रुबुतैलयुक्तैः ।
संमिश्रितैर्वै मधुना प्रलिप्तमल्पैर्दिनैः शाम्यति शक्रलुप्तम् ॥६॥

इन्द्रलुप्ते जपाकुसुमलेपः ।

कृष्णगवीमूत्रयुतैः पिष्टैरालेपितैर्जपाकुसुमैः ।
शतमखलुप्तं नश्यति भवन्ति केशाश्च तत्र घनाः ॥ ७ ॥

इन्द्रलुप्ते गुञ्जाद्यो लेपः ।

बृहतीफलरसपिष्टं गुञ्जायाः फलमथापि वा मूलम् ।
हेमनि घृष्टं संस्थितमपहरति सुराधिपतिलुप्तम् ॥ ८ ॥

खालित्ये नीलोत्पलाद्यो लेपः ।

नीलोत्पलाक्षफलमज्जतिलाजगन्धाः
सार्धं प्रियङ्गुकुसुमैः समपूगवल्कैः[2] ।
संपिष्य यः प्रकुरुते बहुशः प्रलेपं
खालित्यमस्य न पदं विदधाति मूर्ध्नि ॥ ९ ॥

केशशाते मांस्याद्यो लेपः ।

मांसीबलाकुवलयामलकैः सकुष्ठैः
पुंसः प्रलिप्तशिरसो न पतन्ति केशाः ।
स्निग्धायताश्च कुटिलाकृतयो भवन्ति
ते प्रत्युतास्य तरुणालिकुलप्रकाशाः ॥ १० ॥

केशवृद्ध्यर्थं माकन्दबीजादिलेपः ।

माकन्दबीजसहितामलकप्रलिप्त-
मूर्ध्नः शिरोरुहभरः समुपैति वृद्धिम् ।

---

१ 'जनतायाः' ख. । २ 'सार्धं प्रियङ्गुलतिकैः समधूकवल्कैः' ख. ।

दारुणके नीलाब्जकेशरादिलेपः ।

नीलाब्जकेशरतिलामलकैः सुपिष्टै-
र्यष्ट्यन्वितैर्व्रजति दारुणकः प्रणाशम् ॥ ११ ॥

खालित्यादौ माषमस्यादिलेपः ।

अन्तर्धूमविदग्धमाषमुमसीमध्येऽर्कदुग्धं क्षिपे-
त्तैलं सर्षपसंभवं च विमलं तेन प्रलिम्पेच्छिरः ।
रोगान्मूर्ध्नि समुद्भवान्बहुविधांस्तद्वच्च वक्रोद्भवान्
खालित्यं पलितानि चोपशमयत्येतत्प्रयुक्तं नृणाम् ॥१२॥

इन्द्रलुप्ते गुञ्जाफललेपः ।

[1]प्रच्छानपूर्वं परिपिष्टगुञ्जाफलैः समालेपितमिन्द्रलुप्तम् ।
प्रणाशमायात्यचिरेण पुंसां पापं यथा जह्नुसुताभिषेकात् ॥१३॥

दारुणके मरिचाद्यं तैलम् ।

भागेन युक्तं मरिचस्य यत्स्यात्काश्मीरजेन द्विगुणेन तैलम् ।
अभ्यञ्जनात्तद्विनिहन्ति पुंसामल्पैर्दिनैर्दारुणकं सुघोरम् ॥१४॥

दारुणकादौ लोहकिट्टाद्यं तैलम् ।

यल्लोहकिट्टोत्पलसारिवाभ्यां समार्कवाभ्यां त्रिफलान्विताभ्याम् ।
विपच्यते तैलमपास्यति द्राक् शीर्षामयान्दारुणकादिकांस्तत् ॥१५॥

दारुणके कोद्रवमसीलेपः ।

कोद्रवपलालसिद्धा मसी प्रलेपे प्रयोजिता शिरसः ।
अपहरति रोगमचिराद्दारुणमपि दारुणाभिख्यम् ॥ १६ ॥

दारुणके धात्रीफलाद्यो लेपः ।

धात्रीफलारग्वधबालपत्रलाक्षाविमिश्रैः प्रपुनाटबीजैः ।
प्रलेपितो नाशमुपैति पुंसां सुदारुणो दारुणकः क्षणेन ॥१७॥

दारुणकादौ चण्ड्यादिलेपः ।

चण्डीमुरानतविषाणदलैर्हरिद्रा-
मुस्तान्वितैः शिरसि यः कुरुते प्रलेपम् ।

---

१ 'प्रच्छानपूर्वं' क. ।

तस्योत्तमाङ्गमपहाय भजन्ति दूरं
केशद्रुहः सपदि दारुणकादिरोगाः ॥ १८ ॥
धौतः श्रीफलसारेण यदि वा गुडवारिणा ।
व्यूढोऽपि केशनिचयः सुसंस्थानं च गच्छति ॥ १९ ॥

यूकायां पारदलेपः ।

ताम्बूलपत्ररसमर्दितसूतकेन
श्लक्ष्णीकृतेन विधिवत्प्रविलिप्य चीरम् ।
बध्नाति यः शिरसि तस्य पतन्ति सद्यो
यूका भवन्ति न पुनश्च कदाचिदेव ॥ २० ॥

यूकायां विडङ्गाद्यं तैलम् ।

विडङ्गगोमूत्रमनःशिलाभिः सगन्धकाभिः परिपाचितं यत् ।
तैलं भवेत्सर्षपसंभवं तल्लिक्षाश्च यूकाश्च निहन्ति सद्यः ॥ २१ ॥

पलिते शङ्खचूर्णादिलेपः ।

शङ्खस्य दग्धस्य पुटानलेन चूर्णं निघृष्टं सह सीसकेन ।
प्रलेपमात्रेण करोति केशान् शशिप्रकाशानपि षट्पदाभान् ॥२२॥

पलिते पथ्यादिलेपः ।

पथ्याक्षधात्रीफललोहचूर्णैस्तुरङ्गमारासनमार्कवैश्च ।
तुल्यैर्गुडेनापि मसीकृतैश्च लिप्तानि कार्ष्ण्यं पलितानि यान्ति॥२३॥

शिरोरोगे निर्गुण्ड्यादितैलम् ।

निर्गुण्डीलाङ्गलिकार्कसाधितं हन्ति तैलमभ्यङ्गात् ।
शिरसो रुजः समग्रा यदि वाऽपामार्गबीजसंसिद्धम् ॥ २४ ॥

शिरःकण्डूादौ कुष्ठादिलेपः ।

तैलेन मृत्कर्परभृष्टकुष्ठचूर्णान्वितेन प्रविलिप्तमूर्ध्नः ।
कण्डूश्च दाहश्च विनाशमेति शिरोव्रणं शुष्यति दूषिका च ॥२५॥

---

१ 'गूढोपि' ख. । २ 'लिख्या' ख. ।

पलिते लोहादिलेपः।

लोहाभ्रबीजत्रिफलाब्जमूलैः शुष्कैः प्रपिष्टैः सह मार्कवेन।
कार्ष्ण्यं लभन्ते पलितानि लेपान्नीलयं ससौवीरकभागयुक्तैः॥

पलिते शिलापुष्पादिलेपः।

शिलाकुसुमकर्चूरनिशाश्यामानतैः समैः।
पलितानां भवेत्कार्ष्ण्यं बहुशो गुडयोजितैः[1]॥ २७॥

पलिते श्लेष्मान्तकादितैलम्।

श्लेष्मान्तकाक्षपिचुमन्दककामिनीनां
काश्मर्यकस्य यदि वाऽपि हरीतकीनाम्।
तैलं निहन्ति पलितान्युपयुक्तनस्यं
गोक्षीरभोज्यनिरतस्य सदैव पुंसः॥ २८॥

केशकृष्णीकरणार्थं तैलम्।

यः काकिनीबीजसमानभागैस्तिलैः समुत्थेन करोति नस्यम्।
तैलेन तस्यालिकुलप्रकाशाः केशा भवन्ति स्थिरता च देहे॥२९

शिरोरोगे मुखरोगे च नस्यार्थं तैलम्।

अन्तःसारं शेलुबीजोत्थमादा साधु श्लक्ष्णं पेषयेत्काञ्जिकेन।
पश्चाल्लौहे भाजने सूर्यतप्तं कुर्यात्तस्माज्जायते तैलमग्र्यम॥३०॥
आदातव्यं भाजने प्रच्युतं तत्तेनाभ्यङ्गं नस्यकार्यं च कुर्यात्।
ये स्युः केचिद्वक्त्रजा मूर्धजा वा रोगाः सर्वे ते प्रणश्यन्ति तेन
जायन्ते च स्निग्धमुग्धालिनीला वृद्धस्याप्याकुञ्चिताग्रा घनाश्च।
केशाः सर्वे दन्तपङ्क्तिः समग्रा वर्षादूर्ध्वं नूतनोत्पद्यते च॥३२॥

पलिते नस्यार्थं घृतम्।

सिद्धं घृतं मार्कवबर्हिचूडारसेन गव्यं कृतनावनस्य।
करोति पुंसः पलितप्रणाशमासप्तरात्रान्नियताशनस्य॥ ३३॥

शिरोरोगे कुष्ठादिलेपः।

कुष्ठं समीरणरिपोर्जटया समेत-
मत्यम्लकाञ्जिकयुतं परिपेष्य तेन।

---

१ 'गुडधूपितैः' ख.।

लिम्पेच्छिरोर्तिशमनाय शिरोऽथ वाऽऽर-
नालप्रपिष्टतरुणै रुबुकस्य मूलैः ॥ ३४ ॥

## अथ कर्णरोगाधिकारो द्वितीयः ।

कर्णशूले देवदारुतैलम् ।

तैलाक्तवस्त्रशकलावृतदेवदारु-
काष्ठाद्विनिस्सरति यज्ज्वलनप्रतप्तात् ।
तत्तैलमाशु हरति श्रुतिरन्ध्रपीड़ां
श्रीवृक्षकाष्ठशकलेऽप्ययमेव कल्पः ॥ ३५ ॥

कर्णरोगे सैन्धवाद्यं तैलम् ।

सिन्धूत्थहिङ्गुसुरदारुवचाः सकुष्ठ-
विश्वौषधाः समधृता विनिधाय पक्वम् ।
तैलं सगोमयरसं श्रुतिपूरणेन
हन्ति प्रसह्य सकलानपि कर्णरोगान् ॥ ३६ ॥

कर्णरोगे अर्कपत्ररसः ।

अर्कस्य पत्रं परिणामपीतं घृतेन लिप्तं शिखिना च तप्तम् ।
आलोड्य तोयं श्रवणे निषिक्तं कर्णामयो नश्यति पूरणेन॥३७॥

कर्णरोगे रसोनरसः स्नुहीरसश्च ।

आवेष्ट्य सूर्यतरुपत्रचयेन वह्ना-
वातापितात्स्रवति यत्सलिलं रसोनात् ।
यद्वा स्नुहीशकलतो गलितं तदाशु
कर्णव्यथां हरति पूरणतः प्रभाते ॥ ३८ ॥

कर्णपाके कर्णपूरणम् ।

बस्तमूत्रयुतसैन्धवचूर्णं कर्णपूरणविधौ विनियुक्तम् ।
नाडिकाद्वयमवस्थितमार्तिं श्रोत्रयोर्हरति पाकसमुत्थाम् ॥३९॥

पूतिकर्णे कर्णपूरणम् ।

जातीदलप्रसवपीडनजेन पूर्णौ
कर्णौ रसेन सुरभीसलिलेन वापि ।

पूत्यामयं त्यजति तत्क्षणसंप्रणष्ट-
तीव्रव्यथः परिचयप्रतिपन्नसौख्यः ॥ ४० ॥

कर्णपालीवर्धनार्थमभ्यङ्गः ।

मुशलीकन्दक्षोदो माहिषनवनीतमिश्रितोऽभ्यङ्गात्।
वर्धयति कर्णपालीं सप्ताहं धान्यराशिस्थः ॥ ४१ ॥

कर्णपालीविवर्धनार्थं गुञ्जाफलघृतम् ।

गुञ्जाफलैर्विदलितैः क्वथितान्महिष्याः[1]
क्षीरात्क्रमेण जनितं घृतमाददानाम् ।
अभ्यञ्जनादनुदिनं कुरुते मृदुत्वं
विस्तीर्णतां च परमामिह कर्णपाल्याः ॥ ४२ ॥

कर्णपालीवर्धनार्थं तैलम् ।

कटुकतुम्बकबीजसमुद्भवं खरजलेऽष्टगुणे सविषं शृतम् ।
भवति तैलमलंकरणोचितं श्रवणपाशविवृद्धिविधायकम् ॥ ४३ ॥

कर्णपाल्यादिवर्धनार्थमभ्यङ्गः ।

बृहतीफलसितसर्षपरोहिततिमिपित्तरोहिणीमांसैः ।
युक्तं श्रुतिकुचवृद्ध्यै माहिषनवनीतमुद्दिष्टम् ॥ ४४ ॥

श्रोण्यादिवर्धनार्थमभ्यङ्गः ।

क्षौद्रक्षुद्रातगरमरिचैः पिप्पलीसैन्धवाभ्यां
प्रत्यक्पुष्पीयवतिलगदैः श्वेतसिद्धार्थमाषैः ।
श्लक्ष्णीभूतैर्भवति मलनं वाजिगन्धासनाथैः
श्रोणिश्रोत्रस्तनभुजशिरःशेफसां वृद्धिकारि ॥ ४५ ॥

लिङ्गवृध्द्यर्थं[2] दाडिमाद्यं तैलम् ।

संसाधितं दाडिमवल्कलैर्यत्क्षुद्राफलारुष्करचूर्णयुक्तैः ।
अभ्यञ्जनात्सर्षपसंभवं तत्तैलं नृणां लिङ्गविवर्धनं स्यात् ॥४६॥

---

१ ‘ गुञ्जाफलैर्द्विदलितैः ’ ख. । २ अत्र कर्णरोगाधिकारे लिङ्गवर्धन-प्रयोगाभिधानं कर्णपालीवर्धनेन सह वर्धनत्वसाम्यात्, लिङ्गवर्धनप्रयोगाणां प्रायः कर्णपालीवर्धकत्वाच्च ।

लिङ्गवर्धनार्थमुद्वर्तनम् ।

भल्लातकं बालकमम्बुजिन्याः पत्राणि कृष्णं लवणं च तुल्यम् ।
दग्ध्वा पुटान्तः स्वरसं निदध्यात्पक्कस्य तस्मिन्बृहतीफलस्य ॥४७॥
लिङ्गं पुरीषैर्महिषस्य पश्चादुद्वर्तितं तेन विलिप्तमात्रम् ।
पुंसो भवत्युन्मदवाजिमेढ्रसंकाशमातालमभिप्रमाणम् ॥ ४८ ॥

लिङ्गवृद्ध्यर्थं सेवालाद्यो लेपः ।

सेवालगोपिशितचूर्णयुतेन लिप्त-
माज्येन यत्प्रतिमुहुर्मृदितं महिष्याः ।
तल्लिङ्गमुन्मदसुनिष्ठुरदाक्षिणात्य-
कान्तारतोत्सवसहस्रसहत्वमेति ॥ ४९ ॥

लिङ्गवृद्ध्यर्थं द्वितीयो सेवालाद्यो लेपः ।

सेवालसैन्धवसरोरुहिणीदलानि
भल्लातकानि च फलानि च कण्टकार्याः ।
हैयङ्गवीनमपि माहिषमश्वगन्धा-
कन्दे सुधीः प्रणिदधीत दिनानि सप्त ॥ ५० ॥
तैरुद्धृतैस्तदनु यन्माहिषीपुरीषे-
णोद्वर्त्य लिङ्गमुपलेपितमादृतेन ।
तस्याग्रतः खरतुरङ्गमतङ्गजानां
लिङ्गानि लाघवपदं परमं प्रयान्ति ॥ ५१ ॥

लिङ्गवृद्ध्यर्थमुद्वर्तनम् ।

उन्मत्तकस्वरसपेषितवाजिगन्धा-
कन्दोपगूढमहिषीनवनीतमादौ ।
धार्यं फले वृषभवाहनवल्लभस्य
निष्पेष्य बीजरहिते कतिचिद्दिनानि ॥ ५२ ॥

---

१ 'निःशेषबीजरहिते' ख. ।

उद्वर्तितं तदनु यन्महीषीपुरीषै-
धत्तूरकाम्बुनवनीतविलेपितं च ।
तत्साधन निधुवनप्रथनोद्धुरान्ध-
नारीवराङ्गदलनक्षमतां दधाति ॥ ५३ ॥

## अथ नेत्ररोगाधिकारस्तृतीयः ।

नेत्रप्रकोपे अक्षिपूरणम् ।

श्वेतकरवीरकिसलयविच्छेदरसेन पूरिताक्षस्य ।
तत्कालसमुत्पन्नो नयनप्रकोपः शमं याति ॥ ५४ ॥

अक्षिप्रकोपे अपामार्गमूलाद्यञ्जनम् ।

प्रत्यक्पुष्पीमूलं ताम्रमये भाजने ससिन्धूत्थम् ।
मधुसहितं निर्घृष्टं नयनप्रकोपं हरत्याशु ॥ ५५ ॥

नेत्ररोगे कर्णे सहदेवीमूलबन्धनम् ।

कर्णे निबद्धं नयनामयघ्नं दण्डोत्पलायाः प्रवदन्ति मूलम् ।

नेत्ररोगे शिग्रुपत्ररसाश्च्योतनम् ।

क्षौद्रान्वितः शिग्रुदलोद्भवो वा रसोऽक्षिण दत्तोऽक्षिरुजं क्षिणोति ॥

नेत्ररोगे शीतजलासिञ्चनम् ।

शीताम्बुपूरितमुखः प्रतिवासरं यः
कालत्रयेऽपि नयनद्वितयं जलेन ।
आसिञ्चति ध्रुवमसौ न कदाचिदक्षि-
रोगव्यथाविधुरतां भजते मनुष्यः ॥ ५७ ॥

नीलीरोगे कारवेल्लीमूलाश्च्योतनम् ।

मूलेन कारवेल्ल्यास्तुरङ्गमूत्रान्वितेन पिष्टेन ।
परिपूरितनयनानां नीलीदोषः शमं याति ॥ ५८ ॥

---

१ 'स्यात्' ख. ।

पक्ष्मशाते देवदार्वाश्च्योतनम् ।

त्रिदशदारुरजः परिभावितं मस्तुणमाजजलेन पुनः पुनः ।
हरति पूरणतः सकला नृणां नयनपक्ष्मविनाशकृतो रुजः ॥५९॥

नेत्ररोगे रक्तचन्दनाद्या वर्तिः ।

अरुणचन्दनमागधिकानिशाः करकबीजयुता गगनाम्भसा ।
समभिपेष्य कृता नयनामयान् हरति वर्तिरुदीर्णतरानपि ॥६०॥

नेत्ररोगे हरिद्राद्यञ्जनम् ।

निशाह्वयाभयामांसीकुष्ठकृष्णावचूर्णितां ।
सर्वनेत्रामयान् हन्यादेतत्सौगतमञ्जनम् ॥ ६१ ॥
नागरं निम्बपत्रं च पिष्टं तोयेन पूरणात् ।
चक्राङ्काभूलचूर्णाद्वा चक्षुःशूलं प्रशाम्यति ॥ ६२ ॥

नेत्ररोगे धात्रीफलरसाश्च्योतनम् ।

वृक्षास्थिताद्विगलितो नखभेदनेन
धात्रीफलाद्विदलितात् परिपूर्णरूपात् ।
रोगान् रसो हरति लोचनयोः प्रभूतान्
दोषैः कृतान् पवनपित्तकफैः प्रदुष्टैः ॥ ६३ ॥

वातोत्थनेत्रशूले आसेचनम् ।

श्वेतोरुबूकद्रुमपत्रमूलैराजं पयः साधितमम्बुयुक्तम् ।
आसेचनादीक्षणयोः समीरसंभूतशूलोपशमं करोति ॥ ६४ ॥

नील्यादौ चन्दनाद्यञ्जनम् ।

क्रमसंवृद्धमलयजसैन्धवपथ्यापलाशरसविहितम् ।
अञ्जनमपहर्तुमलं नीलीपटलार्मपुष्पाणि ॥ ६५ ॥

शुक्ररोगे गिरिकर्ण्याद्यक्षिपूरणम् ।

श्वेताद्रिकर्ण्याः सपुनर्नवाया मूलैः प्रपिष्टैर्यवचूर्णयुक्तैः ।
विलोचनं पूरितमम्बुयुक्तैर्विमुच्यते पुष्पकृतोपसर्गात् ॥ ६६ ॥

शुक्ररोगे करञ्जबीजवर्तिः ।

किंशुकस्य रसभावितं मुहुर्नक्तमालतरुबीजजं रजः ।
वर्तियोगविधिना विनाशयत्याशु नेत्रगतपुष्पपाण्डुताम् ॥६७॥

१ पूर्वश्लोकोक्ता अरुणचन्दनाद्या वर्तिरित्यर्थः ।

नेत्रपुष्पे बिभीतफलमज्जाञ्जनम् ।

कलितरुफलमज्जा ग्रावणि श्लक्ष्णपिष्टा
हरति नयनपुष्पं प्रातरेवाञ्जनेन ।

नैशान्ध्येऽञ्जनम् ।

श्रवणमलसमेतं मध्वथ क्षुद्रमत्स्यो
हुतवहपुटदग्धो नैशमान्ध्यं क्षिणोति ॥ ६८ ॥

आन्ध्यादौ गुञ्जामूलाञ्जनम् ।

गुञ्जामूलं वस्तमूत्रेण घृष्टं निर्घृष्टा वा वारिणा भद्रमुस्ता ।
आन्ध्यं सद्यस्तैमिरं हन्ति पुंसामत्युद्गाढं नेत्रयोरञ्जनेन ॥६९॥

पटलादौ द्रोणपुष्पीनस्यम् ।

हरति पटलमक्ष्णोस्तण्डुलाम्बुप्रपिष्टा
सिचयगलितसारा नावनाद्द्रोणपुष्पी ।
शमयति च रसोऽस्या नेत्रयोरञ्जनेन
प्रसभमतिचिरोत्थं कामलारोगमाशु ॥ ७० ॥

अञ्जनगुलिका निहन्ति सूर्याह्वेन पुनः पुनर्घृष्टा ।
रजतेन वाथ हेम्ना कणाक्षकेनाथवा शैला ॥ ७१ ॥

कामलायामङ्कोलमूलादिनस्यम् ।[1]

अङ्कोलमूलमथवाऽर्कजटा प्रपिष्टा
स्वच्छेन तण्डुलजलेन समं प्रयत्नात् ।
स्यात्कामलामयहरी कृतनावनाना-
माघ्रातमात्रमपि जालनिकाफलं वा ॥ ७२ ॥

जीमूतकेन सहितं निशिस्थितं वारि कामलां हन्ति ।
शिशिरजलपिष्टमथवा नस्येन कुमारिकामूलम् ॥ ७३ ॥

कामलायां हिङ्ग्वाद्यञ्जनम् ।

हिङ्गुना द्रोणपुष्प्या वा रसेनाञ्जितलोचनः ।
अचिरात्कामलाव्याधिं नरो विजयते ध्रुवम् ॥ ७४ ॥

---

१ नेत्ररोगाधिकारे नस्याञ्जनप्रकरणवशात् कामलाचिकित्साभिधाम् ।

## अथ नासारोगाधिकारश्चतुर्थः ।

नासारक्तस्रावे हरीतक्यादिनस्यम् ।

हरीतकीदाडिमपुष्पदूर्वालाक्षारसो नस्यविधानयोगात् ।
निवारयत्येव चिरप्रवृत्तमप्याशु नासान्तरशोणितौघम् ॥ ७५ ॥

नासार्शसि कटुतुम्बीमूलनस्यम् ।

संपेषितः पर्युषितोदकेन पटान्तनिश्चोतनानिर्मलश्च ।
घ्राणोद्भवार्शांसि निहन्ति सद्यो नस्येन कन्दः कटुतुम्बिकायाः ॥

नासारक्ते पक्वोदुम्बरफलप्रयोगः ।

उदुम्बराणि पक्वानि गुडेन मधुनाऽपि वा ।
उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम् ॥ ७७ ॥

पीनसादौ लाङ्गल्यादिनस्यम्

लाङ्गलीकन्दसुरसाव्योषकुष्ठैः सकट्फलैः ।
नस्यं तु पीनसं हन्यात्पूतिनासं च दारुणम् ॥ ७८ ॥

---

## अथ मुखरोगाधिकारः पञ्चमः ।

ओष्ठस्फुटने जीवन्त्यादिक्षीरम् ।

जीवन्तिकामदनतुत्थकचित्रवल्ली-
दार्वीयुतं कलमशालिसमन्वितं च ।
दुग्धं शृतं शमयति स्फुटनोपसर्ग-
मालेपनादधरसंश्रयमाशु पुंसाम् ॥ ७९ ॥

ओष्ठस्फुटने लेपः ।

सघृतफाणिततैलविमिश्रितं कनकगैरिकसर्जरसान्वितम् ।
सलवणं मदनं विनिवारयत्यधरजान् स्फुटनोच्चटिकाव्रणान् ॥ ८०

मुखाद्रक्तप्रवृत्तौ काकोदुम्बरिकामूलप्रयोगः ।

काकोदुम्बरिकामूलं पिष्टं तण्डुलवारिणा ।
पानान्निवारयत्याशु प्रवृत्तं वदनादसृक् ॥ ८१ ॥

मुखरोगे जातिपत्रधारणम् ।

संचर्वितैर्वक्त्रधृतैः प्रशान्तिं वक्त्रामयो गच्छति जातिपत्रैः ।

दन्तचलने बकुलबीजचर्वणम् ।

दन्तास्तु बीजैर्बकुलद्रुमस्य स्थानच्युता अप्यचला भवन्ति ॥८२॥

मुखदौर्गन्ध्ये मुस्ताद्या वटी ।

मुस्तैलवालुमधुकैर्गदधान्यकाभ्यां
त्रुट्या वटी विनिहिता वदनान्तराले ।
स्वाभाविकोऽपि मुखमुज्झति पूतिगन्धो
वार्ता तु मद्यलशुनादिभवस्य कैव ॥ ८३ ॥

मुखदौर्गन्ध्ये हरीतकीयोगः ।

गोमूत्रमध्ये कथिता प्रगाढं मांस्यन्विता[1] बालककुष्ठयुक्ता ।
हरेच्च पथ्या निहिता मुखान्ते दौर्गन्ध्यमन्यानपि वक्त्ररोगान् ।८४

मुखदौर्गन्ध्ये कुष्ठाद्या वटिका ।

गदकुवलयजातीकोशजातीफलत्व-
ग्विरचितगुटिकाभिर्वक्त्रमध्ये धृताभिः ।
व्रजति झटिति नाशं पूतिरास्यस्य गन्धः
सविधगतनितान्तोद्वेजिताशेषलोकः ॥ ८५ ॥

मुखदौर्गन्ध्ये दन्तधावनम् ।

दौर्गन्ध्यमुखरोगघ्नं कटुतिक्तकषायकम् ।
अभ्यस्यमानं तैलाक्तमन्वहं दन्तधावनम् ॥ ८६ ॥

मुखदाहे गण्डूषः ।

ताम्बूलमध्यस्थितचूर्णकेन दग्धं मुखं यस्य भवेत् कथंचित् ।
तैलेन गण्डूषमसौ विदध्यादम्लारनालेन पुनः पुनर्वा ॥ ८७ ॥

स्वरवृद्ध्यर्थं जातीपत्राद्योऽवलेहः ।

जातीदलैलामधुमातुलुङ्गपत्रैः सलाजैः खलु पिप्पलीभिः ।
कृतोऽवलेहः कुरुते नराणां कण्ठध्वनिं किन्नरनादतुल्यम् ॥ ८८ ॥

---

१ 'मध्यान्विता' ख. ।

कण्ठशालूकोपजिह्विकयोर्निर्गुण्डीमूलचर्वणम् ।

शेफालिकामूलमुशन्ति कण्ठशालूकहन्तृ प्रतिचर्वितं सत् ।
रोगं निहन्यादुपजिह्विकाख्यं नासान्तरप्रस्रुतरक्तधाराम् ॥ ८९ ॥

कण्ठरोगे देवदारुतैलनस्यम् ।

अग्नौ सिद्धं देवदारोः फलानां मिश्रीभूतं वाजिनो वर्चसा यत् ।
तैलं तत्स्याच्छीर्षकण्ठामयानां नाशायालं नस्यकर्मप्रयोगात् ९०

कृमिदन्तके गुञ्जादिमूलप्रयोगः ।

गुञ्जावराहकर्ण्योरन्यतरस्याः समुद्धृतं मूलम् ।
दन्तैश्चर्वितमार्तिं दशनघुणोत्थां विनाशयति ॥ ९१ ॥
मूलानि दुग्धिकाया कमलिन्या वा वराहकर्ण्या वा ।
स्नुह्या वा घ्नन्ति घुणं दन्तैः संचर्व्यमाणानि ॥ ९२ ॥

कृमिदन्तके लाङ्गलीलेपः ।

यस्याङ्गुष्ठस्य नखो भवति समुत्पिष्टलाङ्गलीलिप्तः ।
तदितरदिग्भवदशनकृमिरचिरात् पतति निर्जीवः ॥ ९३ ॥
कुलीरपादान्वितदुग्धसिद्धघृतावसिक्ता दशना न शब्दम् ।
कुर्वन्ति सुप्तस्य विलेपिता वा भवन्ति चेत्कर्कटिकाङ्घ्रिणैते ॥९४॥

व्यङ्गे शशरक्तलेपः ।

तत्कालशस्त्रप्रहतः शशो यस्तस्यासृजा नश्यति लिप्यमानम् ।
व्यङ्गं मुखे जातिफलस्य बाह्यत्वचाऽथवा सन्ततमेव लिप्तम् ९५

व्यङ्गे इङ्गुदीफलमज्जालेपः ।

इङ्गुदीफलसमुद्भवमज्जा पेषिताऽतिशिशिरेण जलेन ।
एकविंशतिदिनप्रविलिप्ता व्यङ्गमाननभवं परिमार्ष्टि ॥ ९६ ॥

व्यङ्गे कृष्णतिलादिलेपः ।

कृष्णैस्तिलैरसितजीरकजीरकाभ्यां
सिद्धार्थकैश्च विहितैर्भसृणप्रपिष्टैः ।
दुग्धान्वितो वदनचन्द्रमसः प्रलेपो
व्यङ्गं विलुम्पति मुहुः परिशील्यमानः ॥ ९७ ॥

हैयङ्गवीनगुडमाक्षिककोलमध्य-
सारैः प्रणश्यति मुखस्य कलङ्कवर्णम्।
तद्वारुणीत्वगथवा छगलीस्तनोत्थ-
क्षीरान्विता क्षपयति प्रसभं प्रलेपात् ॥ ९८ ॥

मुखश्रीवृध्द्यर्थं क्षौद्रादिलेपः।

क्षौद्ररोध्रमधुकैः ससर्षपैर्निस्तुषीकृतयवैश्च पेषितैः।
लेपितं भवति तप्तकाञ्चनप्रेक्ष्यमाननमतीव सुन्दरम् ॥ ९९ ॥

मुखश्रीवृध्द्यर्थं वटपत्रादिलेपः।

परिणतवटपत्रं स्वर्णगन्धा प्रियङ्गु-
र्मधुकमथ सरोजं रोध्रकाश्मीरलाक्षाः।
सलिलयुतमितीदं चित्रवल्लीप्रपिष्टं
जनयति वदनानां कान्तिमत्त्वं प्रलेपात् ॥ १०० ॥

मुखश्रीवृध्द्यर्थं प्रियङ्ग्वादिलेपः।

प्रियङ्गुकाश्मीरजकोलमज्जाह्रीबेरकैश्चन्दनभागयुक्तैः।
पिष्टैः प्रलेपो विहितो मुखस्य द्युतिं शशाङ्कादधिकां विधत्ते ॥

मुखश्रीवृध्द्यर्थं पत्राङ्गादिलेपः।

यः पत्राङ्गमृणालपद्मकगदैः कोलास्थिमज्जान्वितैः
स्वर्णत्वङ्मलयोत्थकुङ्कुमनिशायुग्मैः सकालीयकैः।
श्यामासावररोचनामधुजपायुक्तैर्मसूरैरपि
श्लक्ष्णैः साम्बुभिराहितः प्रकुरुते लेपो मुखे गौरताम् ॥१०२॥

मुखश्रीवृध्द्यर्थं मधूकसारादिघृतम्।

यत्पक्वं मधुसारपद्मकनिशारोध्रैः सकालीयकैः
कङ्कूसर्षपसंयुतैस्तदमलीकुर्याद्धृतं वाससा।
पश्चात् सिन्धुकचूरकुङ्कुमयुतं शीताम्भसि स्थापितं
पक्वं मृद्वनले मुखस्य शिशिरे कान्तिं विधत्ते पराम् ॥ १०३ ॥

---

१ तत् व्यङ्गं, वारुणीत्वक् वरुणवृक्षत्वक्।

वक्त्रश्रीवृद्ध्यर्थं मञ्जिष्ठादितैलम् ।

मञ्जिष्ठामधुकसुचन्दनैः सलाक्षैः
काश्मीरप्रभवयुतैश्च कर्षमात्रैः ।
तैलस्य प्रमितपलाष्टकं विपक्वं
यत्क्षीरे द्विगुणमिते भवत्यजायाः ॥ १०४ ॥
अभ्यङ्गादनुदिवसं विधीयमानं
नारीणां वितरति सप्तभिर्दिनैस्तत् ।
[1]वक्त्राब्जेष्वतनुकपोलभित्तिभागं
प्रस्फूर्जद्रुचिसुभगत्वमत्युदारम् ॥ १०५ ॥

व्यङ्गादौ ताम्रादितैलम् ।

अम्भःक्षालितटङ्कणेन मसृणोत्पिष्टेन यल्लेपितं
ताम्रं तत्परिताप्य सूक्ष्मकणिकाभावं क्रमात्प्रापयेत् ।
तैलं तत्र चतुर्गुणं विनिहितं तैलात् सुरभ्याः पयो
विन्यस्याष्टगुणं पचेत्सुनिपुणो नात्यन्ततीव्रेऽनले ॥ १०६ ॥
कर्षं तैलपले क्षिपेदथ मधूच्छिष्टस्य काश्मीरज-
स्याष्टांशं विनिधाय तेन शिशिरे वक्त्रं समालेपयेत् ।
एवं व्यङ्गकलङ्कबिन्दुवलिभिर्निर्मुक्तमत्युज्ज्वलं
तत्स्यात् पार्वणचन्द्रबिम्बविजयि प्रस्फारचारुद्युति ॥ १०७॥

गण्डमालायामिन्द्रवारुण्यादिप्रयोगः ।

मूलं सुरवारुण्या गोमूत्रयुतं महीध्रकर्ण्या वा ।
अपहरति गण्डमालां पीतं सुश्लक्ष्णपरिपिष्टम् ॥ १०८ ॥

कण्ठमालायां लेपः ।

अर्कक्षीरजपापुष्पतैललाक्षारसैः समैः ।
कण्ठमाला शमं याति प्रलिप्ता सप्तभिर्दिनैः ॥ १०९ ॥

---

१ 'वक्त्राब्जे प्रतनुकपोलभित्तिभासः' क. ।

अपच्यां श्वेतापराजितामूलप्रयोगः ।

पुष्ये गृहीतं गिरिकर्णिकाया मूलं सिताया गलके निबद्धम् ।
गव्येन लीढं यदि वा घृतेन निहन्ति घोरामपचीं तदेव ॥११०॥

गण्डमालायां छुच्छुन्दरीतैलम् ।

छुच्छुन्दरीसाधिततैललिप्ता स्वल्पैर्दिनैर्नश्यति गण्डमाला ।
श्लेष्मान्तककाथरसेन[1] यद्वा सतैलनिष्पावकृताशनस्य ॥ १११ ॥

ग्रीवादिरोगे नस्यप्रयोगः ।

नस्यप्रयोगात्कपिकच्छुमूलमिश्रो रसो झिञ्झिणिकाद्रुमोत्थः ।
ग्रीवाभुजस्कन्धभवानशेषान्निहन्ति रोगानपि बद्धमूलान् ॥११२॥

अवबाहुके नस्ययोगः ।

उदुम्बरक्षीरयुतं खगुप्तामूलं समं झिञ्झिणिकारसेन ।
सरामठं हन्त्यवबाहुकाख्यं नस्यप्रयोगात्पुरुषस्य रोगम् ॥११३॥

---

## अथ स्तनरोगाधिकारः षष्ठः ।

कुचवृद्ध्यर्थं लेपः ।

महिषशूकरकुञ्जरमेदसा बिलनिवासिवसासहितेन या ।
कुचयुगं प्रविलिम्पति कामिनी भवति पीनपयोधरशालिनी ११४

कुचादिवृद्ध्यर्थमश्वगन्धादिलेपः ।

तुरङ्गगन्धेभकणावचाभिः कुष्ठान्विताभिर्मसृणीकृताभिः ।
युतं महिष्या नवनीतमृद्धिं करोति कर्णस्तनमेहनानाम् ॥११५॥

कुचवृद्ध्यर्थं नस्यप्रयोगः ।

स्रोतोञ्जनं तण्डुलधावनेन नस्यक्रियायामुपयुज्यमानम् ।
स्त्रीणां मृदुस्पर्शमलब्धसन्धि कुचद्वयं पीवरमातनोति ॥ ११६ ।

कुचवृद्ध्यर्थमभ्यङ्गः ।

कुष्ठं वचा गजबलेति समं विचूर्ण्य
सर्वं विधाय महिषीनवनीतयुक्तम् ।
अभ्यञ्जयेत्कुचयुगं युवतिर्यदीच्छे-
न्मत्तेभकुम्भविभवप्रतिभं विधातुम् ॥ ११७ ॥

---

१ 'श्लेष्मान्तककाथरतस्य' इति ख. ।

कुचवृद्ध्यर्थं दाडिमादितैलम् ।

विपाचितं दाडिमकल्कयुक्तं तैलं भवेत्सर्षपसंभवं यत् ।
अभ्यञ्जनात्तत्कुरुते नितान्तमुच्चैः स्तनौ वृद्धियुतौ च कर्णौ ११८

कुचवृद्ध्यर्थं वचादितैलम् ।

वचाहरिद्राकटुकाप्रियङ्गुकृताञ्जलीभिः सहितं विपक्वम् ।
तैलं घृतं गोमहिषीभवं च नस्येन वृद्धिं स्तनयोर्विधत्ते ॥११९॥

कुचवृद्ध्यर्थमलम्बुषातैलम् ।

अलम्बुषाकल्ककषायसिद्धं पानेन नस्येन च कामिनीनाम् ।
तैलं विधत्ते स्तनयुग्ममाशु मत्तेभकुम्भद्वितयानुकारि ॥ १२० ॥

---

## अथोदररोगाधिकारः सप्तमः ।

प्लीहवृद्धौ शरपुङ्खामूलचर्वणम् ।

या विशालविटपा शरपुङ्खा मूलमात्मदशनैर्मुहुरस्याः ।
चर्वितं निगिरतो विनिहन्ति प्लीहवृद्धिमकठोरभुजश्च ॥ १२१ ॥

प्लीहोदरे इन्द्रवारुणीमूलप्रयोगः ।

मूलं विदार्य सुरनायकवारुणीजं
नामाभिधाय यदि रोगवतो नरस्य ।
प्रक्षिप्यते वियति दूरतरं तदानीं
प्लीहोदरं क्षयमुपैत्यचिरेण तस्य ॥ १२२ ॥

प्लीहोदरेऽर्कपत्रलवणम् ।

विधाय पूर्वं लवणेन युक्तान्यर्कस्य पत्राणि पुटेन दग्ध्वा ।
यो मस्तुयुक्तानि पिबत्यभीक्ष्णं प्लीहोदरं गच्छति तस्य नाशम् ॥

उदरे पिप्पलीचूर्णयोगः ।

यः सप्तरात्रित्रितयं सुधायाः क्षीरेण चूर्णं मृदितं कणायाः ।
लेढि प्रकामं मधुरं च भुङ्क्ते तस्योदरव्याधिरुपैति नाशम् ॥१२४॥

प्लीहोदरे श्वेतपुनर्नवादिमूलयोगः ।

मूलं समं तण्डुलधावनेन प्रपेषितं श्वेतपुनर्नवायाः ।
पीतं भवेत्प्लीहविनाशहेतुः पाठाजटा छिन्नरुहाजटा वा ॥ १२५ ॥

उदरे विलेपीयोगः ।

विश्राण्य रम्भादलभस्ममध्यात्तोयं ततस्तेन कृता विलेपी ।
स्याद्भक्षिता सत्युदरामयानां नाशाय नूनं दिवसत्रयेण ॥१२६॥

क्रिमिरोगे कन्दलीकन्दयोगः ।

सर्पिर्गुडाभ्यां सह पाचयित्वा यः कन्दलीकन्दमिहात्ति तस्य ।
पतन्ति सद्यः कृमयः समग्रा येऽप्युग्रदत्तोदरकुक्षिरोगाः ॥१२७॥

## अथ कुष्ठरोगाधिकारोऽष्टमः ।

कुष्ठे आमलकादिचूर्णम् ।

यः प्रातरामलकनिम्बदलानि लेढि
चूर्णीकृतान्यनुदिनं प्रविमुक्ततन्द्रः ।
शीर्णाङ्घ्रिपाणिरवगाढतमोऽपि कुष्ठ-
रोगेण कैरपि दिनैः प्रविमुच्यतेऽसौ ॥ १२८ ॥

कुष्ठे हरीतक्यादिलेपः ।

हरीतकीसैन्धवसोमराजीविडङ्गसिद्धार्थकरञ्जबीजैः ।
करोति गोमूत्रयुतैः प्रपिष्टैः कुष्ठप्रणाशं विहितः प्रलेपः ॥१२९॥

दद्रुकुष्ठे सोमराजीप्रयोगः ।

भागं तिलानां सह सोमराज्या भागद्वयेन प्रतिवासरं यः ।
अश्नाति तस्य द्रुतमङ्घ्रिदद्रूश्चिरप्ररूढाऽपि विनाशमेति ॥ १३० ॥

रकसे गोमूत्रादिलेपः ।

आरण्यगोमयनिघृष्टमभिप्रलिप्तं
गोमूत्रतक्रलवणैः क्वथितैः प्रयत्नात् ।
नाशं प्रयाति रकसं चिरसंप्ररूढ-
मप्याशु पापमिव संस्मरणेन शम्भोः ॥ १३१ ॥

कुष्ठे गुञ्जादिलेपः ।

अपगततुषगुञ्जाचूर्णहैयङ्गवीन-
प्रमृदितमुपशान्तिं कुष्ठिनो याति कुष्ठम् ।

यदि तु भवति लिप्तं सर्वतस्ताम्रपात्रे
पिहितमथितकिट्टैस्तन्न भूयो भवेत्तत् ॥ १३२ ॥

दद्रुपामासु हरितालादिलेपः ।

गोमूत्रपिष्टैर्हरितालदूर्वासिन्धूद्भवैर्लेपितमादरेण ।
प्रयाति नाशं नियतं नराणां दद्रुश्च पामा सुचिरप्ररूढा ॥ १३३ ॥

श्वित्रे बाकुचिकाप्रयोगः ।

चूर्णेन भाण्डमुपलिप्य शशाङ्कराज्या-
स्तत्र स्थितेन पयसा दधि संविदध्यात् ।
स्नेहं तदीयमसकृन्मधुनोपयुज्य
श्वित्रं नरो जयति तन्मथितानुपानात् ॥ १३४ ॥

श्वित्रे गिरिकर्णीमूललेपः ।

मूलेन पिष्टेन सिताद्रिकर्ण्या शीताम्बुयुक्तेन विलिप्य गाढम् ।
पक्षात्प्रणाशं सितमेति कुष्ठं चिरप्ररूढं द्विगुणैर्दिनैस्तु ॥ १३५ ॥

श्वित्रे द्विपत्वगादिलेपः ।

दग्धे द्विपद्वीपिशरीरकृत्ती तैलेन मिश्रे तिलसंभवेन ।
सवर्णतामानयतः प्रलेपादङ्गं नृणां पाण्डुरकुष्ठजुष्टम् ॥ १३६ ॥

पामायां सिन्दूराद्यं तैलम् ।

सिन्दूरतुत्थमदनाञ्जनगुग्गुलूनां
चूर्णेन मध्यनिहितेन समं विपक्वम् ।
सिद्धार्थकप्रभवमाशु निहन्ति तैल-
मभ्यञ्जनेन बहुशो विहितेन पामाम् ॥ १३७ ॥

पामायां सिन्दूराद्यभ्यञ्जनम् ।

सिन्दूरमरिचक्षोदयुक्तेनाभ्यङ्गयोगतः ।
माहिषेणाचिरात्पामा नवनीतेन नश्यति ॥ १३८ ॥

---

१ 'रकसं' ख.

शीतपित्ते काश्मरीफलप्रयोगः ।

कालेन पाकं प्रतिपद्य शुष्कं गव्येन सिद्धं पयसोपयुक्तम् ।
काश्मर्यमाशु प्रतिहन्ति शीतपित्तं हिताहाररतेन लीढम् ॥१३९॥

सिध्मे श्यामाद्युद्वर्तनम् ।

श्यामात्मगुप्तामलयोद्भवानि कुष्ठं च बीजानि च मूलकस्य ।
समान्युपादाय कृतं नराणामुद्वर्तनं सिध्महरं वदन्ति ॥ १४० ॥

सिध्मे कार्पासिकापत्रादिलेपः ।

कार्पासिकापत्रविमिश्रकाकजङ्घाकृतो मूलकबीजयुक्तः ।
तक्रेण लेपः क्षितिपुत्रवारे सिध्मानि सद्यो नयति प्रणाशम् ॥

सिध्मे मूलकबीजादिलेपः ।

पिष्टैर्मूलकबीजैः प्रत्यक्पुष्पीरसान्वितैर्लेपः ।
सिध्मानि हरति यदि वा रम्भाक्षारेण संयुताऽथ निशा॥१४२॥

त्वच्यान्युद्वर्तनानि ।

पिष्टा जलेन रजनी महिषीपुरीष-
मध्ये निधाय मृदुना दहनेन पक्का ।
उद्वर्तनेन विदधाति शरीरमुद्य-
च्छीतांशुबिम्बरुचिरुत्तमचारुकान्ति ॥ १४३ ॥

यः कुष्ठसर्षपतिलैर्निशया सदार्व्या
गात्रं प्रलिप्य सलिलैः कुरुतेऽभिषेकम् ।
तस्य प्रतप्तवरकाञ्चनकान्तिगौर-
मुद्दामसौरभमतीव विराजते तत् ॥ १४४ ॥

जम्बूदलार्जुनतरुप्रसवैः सकुष्ठै-
रुद्वर्तनं प्रकुरुते प्रतिवासरं यः ।
प्रस्वेदबिन्दुकणिकानिकरानुषङ्ग-
दुर्गन्धता वपुषि तस्य पदं न धत्ते ॥ १४५ ॥

शरीरदौर्गन्ध्ये शिरीषाद्युद्वर्तनम् ।

शिरीषपद्मकोशीररोध्रोद्वर्तितविग्रहः ।
ग्रीष्मोष्मणाऽपि नाप्नोति दौर्गन्ध्यं जातु मानवः ॥ १४६ ॥

शरीरदौर्गन्ध्ये ह्रीवेरादिलेपः ।

ह्रीवेरोशीरदलैर्मलयजकाश्मीरकाञ्जिकैर्लेपात् ।
अपगच्छति दौर्गन्ध्यं मुण्डीचूर्णस्य पानाद्वा ॥ १४७ ॥
श्यामारग्वधरोध्रलोहरजनीमुस्तैः शिरीषत्वचा
युक्तैर्दाडिमवल्कलेन च कृतः स्यादङ्गरागः शुभः ।
यद्वा दाडिमचूर्णवल्कलरसैर्निम्बस्य पत्रैश्च यः
स स्त्रीणां द्युतिकृन्नृणां तु कथितो जम्ब्वाः कषायोद्भवः ॥१४८॥

## अथ रक्तपित्ताधिकारो नवमः ।

रक्तपित्ते अटरूषकरसादियोगः ।

मथ्वाटरूषकरसैः सितशर्करां च
चूर्णीकृतां समधुकां कृततुल्यभागाम् ।
यो वै नरः पिबति पथ्यरतः प्रभाते
तद्रक्तपित्तमतिदारुणमेति नाशम् ॥ १४९ ॥

## अथ पीनसस्वरभङ्गाधिकारो दशमः ।

पीनसे दधिप्रयोगः ।

गुडमरिचविमिश्रं पीतमाशु प्रकामं
हरति दधि नराणां पीनसं दुर्निवारम् ।
यदि तु सघृतमत्ति क्षुण्णगोधूमवल्लैः
कृतमुपहितमन्नं तत्कुतोऽस्यावकाशः ॥ १५० ॥

पीनसे शिशिरजलप्रयोगः ।

पिबति शिशिरमम्भो यः प्रभाते निशायां
तदनु च शयनीयाधिष्ठितो याति निद्राम् ।

ध्रुवमतिविषमोऽपि क्षीयतेऽस्य त्रिरात्रा-
दधिगतपरिपाकः पीनसः स्निग्धभोक्तुः॥ १५१॥

स्वरभङ्गे बिभीतकादिलेहः।

विहितमसृणचूर्णान्यारनालेन सार्धं
कलितरुफलकृष्णासैन्धवानि प्रलिह्यात्।
अभिलषति विजेतुं यः स्वरस्य प्रणाशं
स पिबतु सह दुग्धेनामलक्या फलं वा॥ १५२॥

---

## अथ कासश्वासहिक्काधिकार एकादशः।

कासे जात्यादिधूमपानम्।

जातीवृषाङ्कोलजटां सपत्रामादाय तद्वन्महिषाक्षभागम्।
दत्त्वा ततो नागबलासुयुग्मं कासप्रशान्त्यै विदधीत धूमम्॥

जातीजटाकिसलयैर्बदरीदलैश्च
लाजामयूरकफलैः समनःशिलैश्च।
स्याद्धूमवर्तिरिह गुग्गुलुना समेतैः
कासच्छिदे बदरिकाग्निविदह्यमानैः॥ १५४॥

श्वासे पिप्पल्यादिचूर्णम्।

मागधिकात्रिफलाकृतचूर्णं यो मधुना सह भोजनकाले।
खादति तस्य विनश्यति शोषश्वासकफज्वरपीनसपीडा॥१५५॥

हिक्कायां पिप्पल्यादिलेहः।

कृष्णा मयूरच्छदभस्मयुक्ता क्षौद्रेण लीढा विनिहन्ति हिक्काम्।
श्वासं च सापूरमपि प्रवृद्धं सुसूत्रतामानयति प्रसह्य॥ १५६॥

श्वासे बिभीतकफलचूर्णम्।

मध्वाक्तमक्षफलकल्पितचूर्णकर्ष-
मुद्धंसिकां[1] हरति भुक्तवताऽवलीढम्।

---

१ उद्धंसिका शुष्ककासः।

श्वासं च सन्ततविकाशविकारभावं
दुःस्थीकृतोदरमिदं सततं नियुक्तम् ॥ १५७ ॥

---

## अथ राजयक्ष्माधिकारो द्वादशः ।

क्षये नागबलाचूर्णम् ।

लीढं नागबलाचूर्णं घृतमाक्षिकमिश्रितम् ।
साजक्षीरमथैणाजमांसचूर्णं क्षयापहम् ॥ १५८ ॥

क्षये वानरमांसोपयोगः ।

घृतेन गव्येन सहोपयुक्तं क्षयापहं वानरमांसमाहुः ।

क्षये नीलीमूलयोगः ।

गोक्षीरयुक्तं प्रशमाय तस्य स्यान्नीलिनीमूलमथामयस्य ॥१५९॥

शोषे श्वदंष्ट्रादिचूर्णम् ।

चूर्णं श्वदंष्ट्राफलवाजिगन्धाविनिर्मितं माक्षिकसंप्रयुक्तम् ।
क्षीरेण सार्धं परिपीयमानं शोषं च कासं च निहन्ति पुंसाम् १६०

शोषे काकजङ्घानीलपुष्प्योः प्रयोगः ।

गव्येन पिष्टा पयसा निपीता निहन्ति शोषं खलु काकजङ्घा ।
संपेष्य पीताऽथ रसाञ्जनेन स्यान्नीलपुष्पी ह्यथ शोषशान्त्यै १६१

कार्श्ये यष्ट्यादि चूर्णम् ।

यष्ट्यश्वगन्धासहिताऽर्कपुष्पी चूर्णीकृता क्षीरयुता प्रदत्ता ।
कृशोऽप्यसौ पीवरतां दधाति पयःकृताहारतयैव मासात् ॥१६२॥

बलवृद्ध्यर्थं यवादिचूर्णम् ।

खादन्ति ये सयवनागबलातुरङ्ग-
गन्धातिलान् गुडविमिश्रितमाषयुक्तान् ।
पीत्वा पयोऽपि न चिरेण भवन्ति वन्य-
मातङ्गभङ्गपटवः स्वबलातिरेकात् ॥ १६३ ॥

---

## अथ शूलाधिकारस्त्रयोदशः ।

परिणामशूले त्रिफलालौहम् ।

परिणामशूलमपहन्ति हठान्मधुलोहचूर्णसहिता त्रिफला ।

परिणामशूले शङ्खभस्मयोगः ।

कथितोदकेन गलितं विधिना लघुशङ्खभस्म यदि वा बहुशः ॥

शूले हरिणशृङ्गभस्मप्रयोगः ।

पुटप्रदग्धं हरिणस्य शृङ्गं घृतेन गव्येन निपीयमानम् ।
हृत्पृष्ठशूलार्तिमपोहति द्राङ्नृणां हिताहारविहारभाजाम् ॥ १६५ ॥

कट्यादिशूले रुचकादिक्वाथः ।

रुचकहिङ्गुमहौषधमिश्रितं पिबति यः कथितं सलिलं नरः ।
अभिभवन्ति न तं कटिपृष्ठहृत्प्रभवशूलरुजो विषमा अपि ।१६६।

---

## अथातिसाराधिकारश्चतुर्दशः ।

नवातिसारे वटजटाप्रयोगः ।

गव्येन तक्रेण सह प्रपिष्य न्यग्रोधपादः परिपीयमाणाः ।
नवोद्धतं घ्नन्त्यतिसारमाशु यथा तमिस्राणि हिमांशुमाली ।१६७।

अतिसारे बब्बूलपल्लवयोगः ।

बब्बूलपल्लवचयं सलिलेन सार्ध-
मापिष्य यः पिबति तस्य कुतोऽतिसारः ।

रक्तातिसारे तण्डुलीयमूलप्रयोगः ।

घृष्टोदकेन घननादजटा तु हन्ति
तं रक्तयुक्तमपि माक्षिकशर्कराढ्या ॥ १६८ ॥

---

## अथ प्रमेहाधिकारःपञ्चदशः ।

प्रमेहे लोहादियोगः ।

चूर्णानि लोहत्रिफलाशिवानां
क्षौद्रेण लीढानि पृथक् समं वा ।

मेहान् समस्तानपि नाशयन्ति,
पीतः कदाचित्स्वरसो गुडूच्याः ॥ १६९ ॥

प्रमेहे धात्रीफलस्वरसादियोगः ।

चूर्णं निशाया मधुना समेतं
धात्रीफलानां स्वरसेन मिश्रम् ।
प्रलीढमल्पैश्च दिनैर्निहन्ति
प्रमेहसंज्ञानखिलान् विकारान् ॥ १७० ॥

---

## अथाश्मरीमूत्रकृच्छ्राधिकारः षोडशः ।

मूत्रकृच्छ्रे हंसपदीमूलादियोगः ।

गोधापदीमूलमनल्पसर्पिस्तैलान्वितं गोक्षुरसंयुतं च ।
निहन्ति सम्यक् कथितं निपीतमप्युत्कटां मूत्रनिरोधपीडाम् १७१

अश्मर्यां तिलक्षारप्रयोगः ।

क्षारो निपीतस्तिलमूलजातः
समाक्षिकः क्षीरयुतस्त्रिरात्रात् ।
हन्त्यश्मरीं सिन्धुविमिश्रितं वा
निपीयमानं रुचकं प्रयत्नात् ॥ १७२ ॥

अश्मर्यां गोपालकर्कटीमूलयोगः ।

गोपालकर्कटीमूलं पिष्टं पर्युषिताम्भसा ।
पीयमानं त्रिरात्रेण पातयत्यश्मरीं हठात् ॥ १७३ ॥

अश्मर्यामर्कपुष्पीयोगः ।

गव्येन पिष्टा पयसाऽर्कपुष्पी निपीयमानाऽनुदिनं प्रभाते ।
विदार्य वीर्येण निजेन तीव्रामप्यश्मरीं नाशयते दशाहात् ॥१७४॥

अश्मर्यां मूत्रकृच्छ्रे च मालतीमूलयोगः ।

ग्रीष्मोत्खातं मालतीमूलमाजे क्षीरे सिद्धं शर्कराचूर्णमिश्रम् ।
पीतं सद्यो मूत्रसंरोधजातां हन्यात्पीडां पातयेदश्मरीं च ॥१७५॥

---

## अथ वृद्ध्युपदंशाधिकारः सप्तदशः।

कुरण्डादौ भार्गीमूलादिलेपः।

संपेषितं ब्राह्मणयष्टिकाया मूलं समं तण्डुलधावनेन।
निहन्ति लेपाद्गलगण्डमालां कुरण्डमुख्यानखिलान् विकारन् १७६

चर्मकीले इन्द्रवारुणीमूललेपः।

सुरेन्द्रवारुणीमूलं वृषमूत्रेण पेषितम्।
चर्मकीलान्निहन्त्याशु प्रलेपात्साधनोद्भवान् ॥ १७७ ॥

उपदंशे त्रिफलामषीप्रयोगः।

पुटप्रदग्धत्रिफलारजोभिरुद्धुण्ड्यमानः सततं नराणाम्।
लिङ्गामयः शाम्यति लेपितो वा हरीतकीयुक्तरसाञ्जनेन १७८

उपदंशे मनुष्यास्थ्यादिलेपः।

नारं कपालं करवीरमूलं पूगीफलं वा कठिनं निघृष्टम्।
लेपान्निहन्ति प्रसभं नराणामभ्युद्गतां साधनरोगपीडाम् ॥१७९॥

कुरण्डे इन्द्रवारुणीमूलप्रयोगः।

वातारितैलमृदितं सुरवारुणीजं
मूलं नरः पिबति यो मसृणं विचूर्ण्य।
गव्ये निधाय पयसि त्रिदिनावसाने
तस्य प्रणश्यति कुरण्डभवो विकारः ॥ १८० ॥

कुरण्डे ईश्वरीमूलयोगः।

तरुमूषकचर्मणा निबद्धः प्रविलिप्तो जटयेश्वरीभुवा च।
उपशान्तिमुपैति मानवानामचिरेणैव कुरण्डसंज्ञरोगः ॥ १८१ ॥

पैत्तिककुरण्डे कर्णवेधः।

यः पित्तदोषेण कुरण्डरोगो भवेच्छिशोर्दक्षिणमुष्कभागे।
तत्रोर्ध्वभागं श्रवणस्य विध्येद्वामस्य वामप्रभवेऽपरस्य ॥१८२॥

## अथ भगन्दराधिकारोऽष्टादशः ।

भगन्दरे दन्त्यादिलेपः ।

दन्तीनिशामलकलेपितमाशु नाशं
पुंसां भगन्दरमुपैत्यपि दुर्निवारम् ।

भगन्दरे गुग्गुलुयोगः ।

क्राथोदकेन मिलितस्त्रिफलोद्भवेन
पीतः प्रणाशयति तत्खलु गुग्गुलुर्वा ॥ १८३ ॥

भगन्दरे खररुधिरादिलेपः ।

खररुधिरसमेतं भूलतायाः शरीरं
दृषदि सहितमस्थ्ना सारमेयस्य घृष्टम् ।
भवति समुपलेपादाशु भाङ्गदरीणा-
मपि विषमतराणामापदां नाशहेतुः ॥ १८४ ॥

भगन्दरे बिडालास्थिलेपः ।

आकृष्य रक्तं जलसर्पिणीभिर्भगन्दरं भूरिकृतप्रलेपम् ।
आखुद्विषोऽस्थ्ना त्रिफलाकषायघृष्टेन नाशं सहसाऽभ्युपैति १८५

---

## अथाशोंऽधिकार ऊनविंशतितमः ।

अर्शसि सूरणादिकल्कः ।

अर्शांसि नाशयति सूरणचूर्णमिश्रं
तक्रं नृणां कुटजवल्कयुतं निपीतम् ।

अर्शसि जीमूतफलवर्तिः ।

यत्नेन वर्तिरथवा गमिता गुदेन ।
या जालिनीफलरजोगुडसंप्रयुक्ता ॥ १८६ ॥

अर्शसि कटुलाब्वाद्यावर्तिः ।

कटुलाबुसुरनाथवारुणीजालिनीफलरजोगुडैः कृता ।
वर्तिराशु विनिहन्ति देहिनां पायुमध्यनिहिताऽर्शसां चयम् १८७

अर्शसि कटुतुम्बीबीजलेपः ।

आर्द्रस्य बीजैः कटुतुम्बकस्य संपेषितैः काञ्जिकबीजयुक्तैः ।
प्रयान्ति पायुप्रभवाः प्रणाशं कीलाः प्रलेपेन कृतेन सद्यः १८८

अर्शसि पलाशादिघृतम् ।

त्रिगुणेन पलाशभस्मनः सलिलेनोषणकत्रयेण वा ।
परिपाचितमाज्यमश्नुते ध्रुवमाशु प्रशमोऽर्शसां भवेत् ॥ १८९ ॥

अर्शसि हरिद्रादिलेपः ।

हरति कुलिशवृक्षप्रसुतक्षीरसिक्तं
प्रमृदितमुपलेपान्नैशमर्शांसि चूर्णम् ।
अथ भवति रजश्चेद्देवदालीफलानां
तदपि खलु विधत्ते सैन्धवोपेतमेतत् ॥ १९० ॥

अर्शसि बिल्वफलकृष्णतिलयोर्योगौ ।

यः संततं बिल्वशलाटुभोजी रक्तार्शसां नाशमसौ करोति ।
कृष्णैस्तिलैर्मिश्रितमत्ति यो वा हैयङ्गवीनं सतताभियुक्तः॥१९१॥

अर्शसि चित्रकमूलादियोगः ।

यश्चित्रकोत्थमथवा मुशलीसमुत्थ-
मादाय कृष्णचिरबिल्वसमुद्भवं वा ।
गोमूत्रयुक्तमभिपिष्य पिबत्यभीक्ष्णं
मूलं न तस्य गुदकीलकृताऽस्ति भीतिः ॥ १९२ ॥

क्षुद्बोधार्थं यवक्षारादिचूर्णम् ।

प्रातर्यवक्षारमहौषधाभ्यां चूर्णेन तुल्येन विमिश्रितं यः ।
लिह्याद्धृतं तस्य न शाम्यति क्षुद्यो वा पिबत्युष्णजलेन शुण्ठीम् ॥

क्षुद्बोधार्थं सैन्धवादिचूर्णम् ।

यः सैन्धवं मागधिकां शिवां च संचूर्ण्य वह्निं च समानभागम् ।
प्रातः पिबत्युष्णजलेन तस्य क्षुत्क्रोडमांसैरपि नैति शान्तिम् ॥

---

## अथ छर्दितृषाधिकारो विंशतितमः ।

छर्द्यां कतिपययोगाः ।

क्वाथं गुडूच्याः शृतशीतलं यो
मध्वन्वितं श्रीतरुसाधितं वा ।
दूर्वां पिबेत्तण्डुलवारिणा वा
तस्य प्रशान्तिं समुपैति वान्तिः ॥ १९५ ॥

तृषायां रक्तचन्दनादिशिरोलेपः ।

अरुणचन्दनचन्दनवालकै-
र्नलदपद्मकतुल्यकृतांशकैः ।
शिरसि लेपनमाचरतां नृणां
तृडपयात्युपशान्तिमसंशयम् ॥ १९६ ॥

तृषायां नीलोत्पलादिवटिका ।

नीलाब्जकुष्ठमधुलाजवटप्ररोहैः
श्लक्ष्णीकृतैर्विरचिता गुटिका मुखस्था ।
तृष्णां निवारयति तत्क्षणमेव तीव्रा-
मर्थस्पृहामिव यतेः परमात्मचिन्ता ॥ १९७ ॥

---

## अथ ज्वराधिकार एकविंशतितमः ।

ज्वरे औषधग्रहणयोग्यावस्था ।

निर्वातसेवाकथिताम्बुपानस्वेदोपवासैः क्षपितावशेषे ।
आमे समस्तज्वरपीडितानां योगान् प्रयुञ्जीत न पूर्वमेव ॥१९८॥

वातज्वरे गुडूच्यादिकषायः ।

वातज्वरोपशमनाय पिबेद्गुडूची-
दुःस्पर्शनागरघनकथितं कषायम् ।

पित्तज्वरे नलदादिकषायः ।

पित्तोद्भवे नलदपर्पटकाब्दशुण्ठी-
श्रीखण्डनिष्कथितमेतदुशन्ति वैद्याः ॥ १९९ ॥

कफज्वरे शुण्ठ्यादिकषायः।

शुण्ठीयवासकटुपाब्दवृतः कषायः
श्लेष्मोद्भवं शमयति ज्वरमाशु पीतः।

सर्वज्वरे शुण्ठ्यादिकषायः।

सर्वज्वरप्रशमनार्थमुदाहरन्ति
विश्वौषधेन सह पर्पटकं मुनीन्द्राः॥ २००॥

सर्वज्वरे मुस्तादिक्वाथः।

पिबति योऽब्दयवासकवालकैः
सकटुकैश्च महौषधसंयुतैः।
शृतकषायवरान् ज्वरमस्य ते
व्यपनयन्त्यनलं च वितन्वते॥ २०१॥

सर्वज्वरे द्वितीयः शुण्ठ्यादिक्वाथः।

विश्वौषधच्छिन्नरुहाकिराततिक्तैः समुस्तैः क्वथितं जलं यः।
पिबत्यसौ न ज्वरसंभवानामाधारतामेति रुजां कदाचित् २०२

सर्वज्वरे निदिग्धिकादिक्वाथः।

निदिग्धिकावारिददेवदारुशृतं जलं हन्ति रुजो ज्वरोत्थाः।

सर्वज्वरे मृणालादिक्वाथः।

मृणालमुस्तासहितं कदाचित्तदेव हन्ति क्वथितं ज्वरार्तिम् २०३

सर्वज्वरे गुडूच्यादिक्वाथः।

छिन्नोद्भवानिम्बपटोलमुस्ताफलत्रयैर्धान्यकसंयुतैर्वा।
कृतं कषायं मधुशर्कराढ्यं पिबेज्ज्वरस्तस्य शमं प्रयाति॥ २०४॥

हरितक्यादिचूर्णम्।

चूर्णं शिवामलकचित्रकपिप्पलीनां
श्लक्ष्णीकृतं पिबति यः शिशिरोदकेन।
दीप्तिं करोति च परां जठरानलस्य
क्षीणेन्द्रियस्य कुरुते रतिशक्तिमेतत्॥ २०५॥

सर्वज्वरे मृणालादिकषायः।

मृणालधात्रीफलचन्दनैर्यः शृतं गुडूचीघनपर्पटैश्च।
सधान्यकैरम्बु पिबेत्सिताढ्यं मध्वन्वितं तस्य कुतो ज्वरार्तिः॥

सन्निपातज्वरे द्राक्षादिकषायः।

द्राक्षाटरूषकृतमालयवासभूमि-
निम्बैः शृतं मलयजेन युतैः पयो यः।
दोषत्रयेण जनितेऽपि पिबेज्ज्वरेऽसौ
तत्कालमाशु लभते बलमत्युदारम्॥ २०७॥

सर्वज्वरे व्याघ्र्यादिकषायः।

व्याघ्रीपटोलत्रिफलानिशाब्दैः सरोहिणीकैः पिचुमर्दयुक्तैः।
सदेवकाष्ठैश्च जलं नराणां सर्वज्वरान् हन्ति निपीयमानम् २०८

सन्निपातज्वरे पुष्करमूलादिक्काथः।

पुष्करमूलगुडूचीनिदिग्धिकानागरैः कृतः क्वाथः।
कासश्वासान् सबलान् ज्वरं च हन्ति त्रिदोषभवम्॥ २०९॥

ज्वरे निदिग्धिकादिक्काथः।

निदिग्धिकाच्छिन्नरुहोपकुल्याविश्वौषधैः साधितमम्बु पीतम्।
हन्ति ज्वरं श्वासबलासकासशूलानि मान्द्यं जठरानलस्य॥२१०

पित्तज्वरे पिप्पलीमूलादिक्काथः।

यः पिप्पलीमूलशिवाम्बुवाहव्याघ्रिविश्वशुण्ठीकटुरोहिणीनाम्।
यः पर्पटोशीरविमिश्रितानां क्वाथं पिबेत्पित्तसमुद्भवोऽस्य।
ज्वरः शमं याति सतृट् समूर्च्छस्तिक्तास्यतादाहयुतः क्षणेन २११

पित्तज्वरे ह्रीबेरादिकषायः।

ह्रीबेरपर्पटचन्दनशुण्ठ्युशीर-
मुस्तैः कृतं पिबति यः पुरुषः कषायम्।
तृड्दाहस्वेदजननं जयति ज्वरं स
पित्तोत्थमुग्रमपि दत्तदुरन्तमूर्च्छम्॥ २१२॥

विषमज्वरे क्षीरप्रयोगाः ।

यः पिप्पलीचूर्णविमिश्रमाजं मध्वन्वितं सुकथितं च गव्यम् ।
पयः पिबत्याशु विनश्यतोऽस्य हृद्रोगकासौ विषमज्वरश्च ।२१३।
गव्यं पयो गोमयसारिवादिमिश्रं प्रदेयं विषमज्वरार्तौ ।
आजं कदाचिन्मसृणप्रपिष्टविश्वौषधोपेतमिमां निहन्ति ॥२१४॥

ज्वरे तन्द्रायां नस्यप्रयोगः ।

सिन्धूत्थमुस्तबृहतीफलयष्टिचूर्ण-
नस्येन नश्यति नृणां विषमाऽपि तन्द्रा ।
शाम्यत्यसौ मरिचमाक्षिकवाजिलाला-
पूर्णेक्षणस्य यदि वा पुरुषस्य सद्यः ॥ २१५ ॥

ज्वरे निद्रायां काकजङ्घामूलबन्धनम् ।

यः सततमेव निद्रापरिघूर्णितलोचनो दिवारात्रौ ।
वायसजङ्घामूलं मूर्ध्नि तदीये निबध्नीयात् ॥ २१६ ॥

ज्वरसंतापे सर्जरसाद्यं तैलम् ।

सकाञ्जिकं सर्जरसेन युक्तं तैलं विपक्वं मृदितं जलेन ।
अभ्यञ्जनान्मारुतरक्तदाहज्वरार्तिसन्तापमपोहति द्राक् ॥२१७॥

दाहज्वरे इन्द्रयवाद्यं तैलम् ।

इन्द्रयवचूर्णकुडवं मञ्जिष्ठायाः पलार्धमादाय ।
तैलप्रस्थं तेन प्रस्थशते काञ्जिके विपचेत् ॥ २१८ ॥
उपयुक्तं तद्दारुणदाहज्वरनाशनं भवति पुंसाम् ।
अङ्गानां च करोति प्रहर्षमभ्यङ्गयोगेन ॥ २१९ ॥

---

## अथ वातरोगाधिकारो द्वाविंशतितमः ।

ऊरुस्तम्भे भल्लातकादिकषायः ।

भल्लातकोपकुल्यातन्मूलैः साधितं पिबन्नम्भः ।
ऊरुस्तम्भादचिराद्घोरादपि मुच्यते नियतम् ॥ २२० ॥

ऊरुस्तम्भे वल्मीकमृत्तिकादिलेपः ।

वल्मीकमृन्मूलकबीजयुक्ता तुरङ्गगन्धासहिता प्रलेपात् ।
उन्मर्दनेनापि च घोरमूरुस्तम्भं विनाशं नयति प्रसह्य ॥ २२१॥

सन्धिवाते निम्बमूलप्रयोगः ।

जरठपिचुमन्दमूलं पिष्टं शीतेन वारिणा पीतम् ।
अपहरति वातदोषं संधिकसंज्ञं प्रकर्षेण ॥ २२२ ॥

सन्धिकवाते तगरमूलादियोगः ।

तक्रेण पिष्टं तगरस्य मूलमार्द्रं निपीतं विनिहन्ति शीघ्रम् ।
शेफालिकामूलविनिर्मितो वा काथो नृणां सन्धिकवातरोगम् ॥

वातरोगेऽस्थिसंधातिकायोगः ।

सार्धं मांसैरस्थिसङ्घातिकां यो
भुङ्क्ते यद्वा व्यञ्जनेनापरेण ।
क्षिप्रं शाम्यत्यस्थिभङ्गोऽस्य नूनं
वातव्याधिश्चातितीव्रोऽपि यः स्यात् ॥ २२४ ॥

## अथ पादरोगाधिकारस्त्रयोविंशतितमः ।

पाददाहे लेपौ ।

साज्यैः सक्तुभिरभ्यक्तौ वल्लीक्षीरसमन्वितैः ।
शाल्मलित्वग्विलिप्तौ वा पादौ संतापमुज्झतः ॥ २२५ ॥

पादस्फुटने गुडादिलेपः ।

गुडगुग्गुलुसर्जरसैर्गैरिकसिन्धूत्थसिक्थकक्षौद्रैः ।
सिद्धार्थकमधुकघृतैर्न स्फुटतो लेपिताव‌ङ्घ्री ॥ २२६ ॥

## अथ चर्मकीलाधिकारश्चतुर्विंशतितमः ।

चर्मकीले कुमारिकायोगः ।

हरति गृहकुमारीपत्रमावेष्टनेन
ग्रथनविधिविशेषाच्चर्मकीलांस्तृतीये ।

१ 'मूलं सार्धं' ख. ।

अहनि गुरुतरानप्यङ्गलब्धप्रतिष्ठान्
विधिरिव विपरीतः पौरुषस्य प्रकारान् ॥ २२७ ॥

चर्मकीले गोष्ठीवल्लीमूलयोगः ।

गोष्ठीवल्लीमूलनिर्घृष्टवक्रास्तस्याः पत्रैरेव वा घृष्यमाणाः ।
नाशं पुंसां चर्मकीलाः प्रयान्ति द्यूतासक्त्या दुर्मतीनामिवार्थाः ॥

मषके चूर्णघर्षणम् ।

वातारिपत्रवृन्तप्रान्तेनादाय चूर्णकं बहुशः ।
तेन निघृष्टस्तु मषः[1] प्रस्नुतरुधिरः क्षयं याति ॥ २२९ ॥

मषके शङ्खभस्मयोगः ।

निशोषितसुवर्चिकासहिततोयनिर्वापितं
समुद्रभवकम्बुजं भवति भस्म लेपान्नृणाम् ।
मषस्य शमहेतवे भुजगकञ्चुकी वा दृढं
प्रघर्षणविधानत (स्तदनु कोरिते कञ्चुके ?) ॥२३०॥

तीव्रानले प्रोषितकोटिभागकार्पासिकाकाण्डवितीर्णदाहः ।
मषः प्रयाति प्रशमं नराणां चिरप्ररूढोऽप्यचिरेण नूनम् ॥२३१॥

---

## अथाग्निदग्धाधिकारः पञ्चविंशतितमः ।

अग्निदग्धे जीरकाद्यं घृतम् ।

प्राग्जीरकेण सहितं परिपाच्य सर्पि-
स्तत्रावपेन्मदनसर्जरसौ ततोऽनु ।
अभ्यञ्जनं वपुषि तेन हुताशदग्धे
कुर्वंस्तदार्तिमचिरेण जयत्ययत्नात् ॥ २३२ ॥

अग्निदग्धे यवमस्याद्यभ्यङ्गः ।

यवान् प्रतप्ते विनिधाय तैले तिलोद्भवे श्लक्ष्णमसीं विधाय ।
तल्लिप्तमग्निप्रविदग्धमङ्गं तत्तैललिप्तं च रुजं जहाति ॥ २३३ ॥

---

१ 'घृष्टो मषकः सद्यः' ख. ।

मल्लातकोत्थश्वयथावभ्यङ्गः ।

हैयङ्गवीनं महिषीसमुत्थं पयःप्रपिष्टैः सहितं तिलैर्यत् ।
अभ्यङ्गयोगेन तदामनन्ति भल्लातकोत्थश्वयथोर्निहन्तृ ॥ २३४ ॥

---

## अथ व्रणाधिकारः पञ्चविंशतितमः ।

शस्त्रप्रहारे कर्पूरसर्पिःपूरणम् ।

सद्यः कर्पूरसर्पिर्भ्यां पूरितो वस्त्रयन्त्रितः ।
शस्त्रप्रहारः संरोहत्यपूयः पाकवर्जितः ॥ २३५ ॥

शस्त्रक्षते शरपुङ्खारसपूरणम् ।

शस्त्रक्षते दशनचर्वितबाणपुङ्खा-
मूलोद्भवं विनिदधीत रसं प्रयत्नात् ।
तस्मिन् पुरीषमथवा महिषीसुतस्य
प्राङ्निर्गतं मसृणचूर्णितमाशु दद्यात् ॥ २३६ ॥

शस्त्रक्षते दण्डोत्पलास्वरसपूरणम् ।

दण्डोत्पलायाः स्वरसेन पूर्णो रिक्तीकृतो यः परिपूरितश्च ।
पश्चान्निबद्धो मृदुपट्टकेन क्षिप्रं स संरोहति शस्त्रघातः ॥ २३७ ॥

शस्त्रक्षते लज्जालुकादिमूलप्रलेपः ।

लज्जालुकेषुपुङ्खाभार्ङ्गीणां मध्यतः प्रलेपेन ।
एकस्या जलपिष्टं मूलं शस्त्रक्षतेषु हितम् ॥ २३८ ॥

शस्त्रक्षते काकजङ्घाप्रलेपः ।

दिनत्रयं वायसजङ्घिकायाः शस्त्रप्रहारे कुरुते प्रलेपम् ।
अजातपूयो व्यथया विहीनः संरोहमभ्येति स तस्य शीघ्रम् २३९

शस्त्रक्षते लज्जालुमूलतैलम् ।

आर्द्रेण लज्जालुसमुद्भवेन मूलेन तैलं परिपाचितं यत् ।
तत्स्वेदितः पाकविवर्जितो द्राक् संरोहमागच्छति शस्त्रघातः ॥

शस्त्रघातेऽपामार्गमूलतैलम् ।

तिलतैलमपामार्गमूलेनाम्भोन्वितेन यत् ।
सिद्धं तत्स्वेदितः शस्त्रघातो न कुरुते व्यथाम् ॥ २४१ ॥

शस्त्रक्षते गोष्ठाम्लिकादिचूर्णम् ।

गोष्ठाम्लिकाऽरण्यकुमारिकायाः
कन्दस्तथा वेश्मकुमारिकायाः
गोपालपीठं च मयूरकश्चे-
त्येतैर्विपाच्यं घृतमंशतुल्यैः ॥ २४२ ॥

स्वेदेन तच्छस्त्रनिपातजातामार्तिं नृणां तामचिरान्निहन्ति ।
पुत्रः पितॄणां नरके स्थितानां यथा तृडादीनुदकादिदानैः २४३

शस्त्रघाते रक्तस्तम्भनार्थमपामार्गपत्ररसः ।

निष्पीडितैः करपुटेन मयूरकस्य
पत्रैर्विनिःसरति यः स्वरसोऽतिसान्द्रः ।
तत्पूरिते सततनिर्यदपि क्षणेन
रक्तं निरुद्धमिव तिष्ठति शस्त्रघाते ॥ २४४ ॥

शल्यनिर्गमनार्थं व्रणमुखे लाङ्गलीकन्दलेपः ।

पिष्टेन लाङ्गलक्याः कन्देन विलेपिते व्रणस्य मुखे ।
सद्यो निर्याति क्षताच्छल्यं चिरकालनष्टमपि ॥ २४५ ॥

प्रणष्टशल्यापहरणार्थं इन्द्रवारुणीमूललेपः ।

व्रणपर्यन्तालेपान्मूलं जलपिष्टमिन्द्रवारुण्याः ।
कर्षति नष्टं शल्यं कदाचिदजशृङ्गिकामूलम् ॥ २४६ ॥

नाडीव्रणे आवाल्हिकामूलतैलम् ।

आवाल्हिकामूलयुतैर्विपक्वं तैलं तिलोत्थं शकलैर्निशायाः ।
नाडीं चिरोत्थामपि पूर्यमाणामभ्यञ्जनाद्रोहयति प्रसह्य ॥२४७॥

---

१ 'शस्त्रव्रणो' ख. । २ 'घृतमस्तुतुल्यैः' ख. । ३ 'वृन्तेन' क. ।

नाडीव्रणे कोद्रवान्नोपयोगः ।

यो माहिषेण दध्ना भुङ्क्तेऽन्नं कोद्रवोद्भवं सततम् ।
नाडीव्रणो विरोहति तस्य भृशं पूर्यमाणोऽपि ॥ २४८ ॥

नाडीव्रणे कङ्गुणीमूलप्रयोगः ।

यः कङ्गुणीमूलसमांशखण्डमश्नाति नित्यं पुरुषोऽभियुक्तः ।
नाडीव्रणो रोहति तस्य शीघ्रमनारतमस्रुतसान्द्रपूयः ॥ २४९ ॥

दुष्टव्रणे तालकादिमषीप्रयोगः ।

दहेत्पुटे तालकतण्डुलीयौ तुल्यांशकौ तत्र भवेन्मसी या ।
तत्पूरिता रोहति दुष्टनाडी दुष्टव्रणो वा चिरकालजातः॥२५०॥

समुद्रफेनघर्षणजनितशोफे लेपः ।

अम्भोधिफेनकषणाकुपितास्रगुत्थं
यन्मण्डलं भवति तच्छिशिराम्बुपिष्टैः ।
बीजैः प्रणश्यति पलाशतरोः प्रलिप्तं
सान्ध्यं यथा तिमिरमिन्दुकरोपगूढम् ॥ २५१ ॥

## अथ ग्रन्थ्यर्बुदाधिकारः षड्विंशतितमः ।

अर्बुदे यवक्षारादिलेपः ।

लिप्तं यवक्षारविडङ्गबीजगन्धोपलैः स्यान्मसृणीकृतैर्यत् ।
रक्तेन मिश्रैः सरटस्य सद्यस्तदर्बुदं शाम्यति नान्यथैतत् ।२५२।

ग्रन्थ्यादौ उत्तिण्डीमूललेपः ।

यः सौम्यदिक्प्रसृत उक्तविधानपूर्व-
मुत्पाटितः शिशिरपर्युषिताम्बुपिष्टः ।
उत्तिण्डिकाङ्घ्रिरुपलेपनतः स आशु
ग्रन्थीन्विनाशयति सार्बुदगण्डमालान् ॥ २५३ ॥

ग्रन्थ्यादावतस्यादिलेपः ।

उमाशमीसर्षपशिग्रुबीजैर्जपान्वितैर्मूलकबीजयुक्तैः ।
तक्रेण पिष्टैर्विहितः प्रलेपो ग्रन्थीन्निहन्त्याशु सगण्डमालान् २५४

ग्रन्थावर्कशलभयोगः ।

यो भवत्यतिकठोरतरोऽपि प्राप्नुयाच्च न कदाचन पाकम् ।
सोऽर्कगुल्मशलभस्य रसेन ग्रन्थिराशु शममेति विलिप्तः ॥२५५॥

## अथापस्मारोन्मादाधिकारोऽष्टाविंशतितमः ।

अपस्मृतौ योगः ।

उद्बद्धमानवगलव्यतिषक्तमग्नौ
रज्जुं विदह्य निपुणेन कृता मषी या ।
सा शीतलेन सलिलेन समं निपीता
पुंसामपस्मृतिविनाशकरी प्रदिष्टा ॥ २५६ ॥

भूतग्रहोपशान्त्यर्थं गिरिकर्णीमूलयोगः ।

संपिष्य तण्डुलजलेन सिताद्रिकर्णी-
मूलं घृतेन सह नस्यविधौ प्रयुक्तम् ।
भूतग्रहोपशमनं, मुनिवृक्षपुष्प-
जातो रसः समरिचश्च तथैव दृष्टः ॥ २५७ ॥

ग्रहोपशान्त्यर्थं धूपः ।

सिद्धार्थनिम्बदलपन्नगकृत्तिहिङ्गु-
संयोजितो निगदितः सहसैव पुंसाम् ।
डाकिन्युपद्रवभयोपशमाय धूप-
स्तद्धूपनाद्भवति तद्विधृतस्य मोक्षः ॥ २५८ ॥

ग्रहोपशमार्थं नस्यम् ।

गोमूत्रेण तु सहितं सम्यक्पक्वं फलं विशालायाः ।
नस्येन हन्ति भूतान् रक्षांसि ब्रह्मपूर्वाणि ॥ २५९ ॥

ग्रहोपशमनार्थमञ्जनम् ।

गोपित्तसिन्धुभवमागधिकाप्रसूत-
चूर्णैः कृतं समरिचैर्नयनाञ्जनं यत् ।

भूतग्रहप्रशमनं तदुदाहरन्ति
संत्रासनं च रजनीचरसंहतानाम् ॥ २६० ॥

ग्रहोपशमार्थमञ्जनयोगः ।

कूष्माण्डीफलसलिलेन पुष्यसंज्ञे
नक्षत्रे मसृणतरां प्रपिष्य दार्वीम् ।
कर्तव्यं नयनयुगेऽञ्जनं प्रशस्तं
निःशेषग्रहरजनीचरोपशान्त्यै ॥ २६१ ॥

चातुर्थकज्वरे धूपः ।

कृष्णाम्बरग्रथितगुग्गुलुघूकपक्षै-[1]
र्मिश्रीकृतो हरति तत्क्षणमेव धूपः ।
चातुर्थिकज्वरमनल्पदिनोपगूढ-
सर्वाङ्गमप्यहिमरश्मिरिवान्धकारम् ॥ २६२ ॥

---

## अथ विषरोगाधिकार एकोनत्रिंशत्तमः ।

वृश्चिकादिविषे पुनर्नवायोगः ।

यः पिबति पुष्यदिवसे जलपिष्टं सितपुनर्नवामूलम् ।
तत्सन्निधौ न वर्षं वृश्चिकभुजगाः प्रसर्पन्ति ॥ २६३ ॥

सर्पविषनिवारणार्थं गरुडप्रतिमाधारणम् ।

तरक्षुदन्तेन विनिर्मितां यः पतत्रिराजप्रतिमां बिभर्ति ।
न वीक्षितुं तस्य मुखं क्षमन्ते येऽपि स्वयं वासुकितक्षकाद्याः २६४

विषोपशमार्थं गरुडीमूलयोगः ।

पुष्ये निपीतं गरुडीसमुत्थं मूलं नृणां पन्नगदंशभीतिम् ।
संवत्सरार्धं हरति प्रसह्य का वृश्चिकाद्यैर्गणनैव तेषाम् ॥ २६५ ॥

---

१ 'वृकपुच्छपक्षैः कृतो' ख. ।

नस्याञ्जनालेपनपानयोगैर्भुजङ्गदष्टस्य विषं निहन्ति ।
मूलं गरुड्याः[1] परिघृष्यमाणं न श्यामलत्वं प्रतिपद्यते चेत् २६६

विषोपशमार्थं लज्जालुमूलयोगः ।

लज्जावतीमूलविलिप्तपाणिर्बद्धाऽथवा तत्र तदीयमूलम् ।
गृह्णाति सर्पान् भ्रमतोऽतिघोरान् पुमान् सुपर्णप्रतिमप्रभावः २६७

गोनाशविषेऽर्कमूलादिप्रयोगः ।

अर्कमूलत्वचश्चूर्णं पीतं शीतेन वारिणा ।
धत्तूरकाश्वमाराभ्यां गोनाशविषनाशनम् ॥ २६८ ॥

मण्डलिविषे काकादनीमूलयोगः ।

अपहरति मण्डलिविषं पानेनालेपनेन वा सद्यः ।
काकादन्या मूलं काञ्जिकपरिपेषितं पुंसाम् ॥ २६९ ॥

कृत्रिमविषोपशमार्थं तण्डुलीययोगः ।

तण्डुलोदकयुतं परिपिष्टं मूलमम्बुदरवस्य घृताढ्यम् ।
पीयमानमतिदारुणवेगं कृत्रिमं गरलमाशु निहन्ति ॥ २७० ॥

मण्डलिविषे नीलिनीमूलयोगः ।

तण्डुलजलेन पिष्टं नीलिन्या मूलमाशु नाशयति ।
पानेन मण्डलिविषं यदि वा लज्जावतीमूलम् ॥ २७१ ॥

कोद्रवोत्थभ्रमे कूष्माण्डस्वरसोपयोगः ।

गुडेन कूष्माण्डफलाम्बु पीतं स्यात्कोद्रवोत्थभ्रमनाशहेतुः ।

धत्तूरमदप्रतीकारः ।

मोहे तु धत्तूरकखादनोत्थे सशर्करं क्षीरमुशन्ति वैद्याः ॥२७२॥

पूगफलजनितमदप्रतीकारः ।

शान्तिं द्रुतं व्रजति पूगफलोपयोग-
जातो जलेन चुलुकैरुपयोजितेन ।

---

१ 'गुडूच्याः' ख. ।

शुष्केण वा वनसमाहृतगोमयेन
घ्रातेन तस्य सहसैव भवेत्प्रणाशः ॥ २७३ ॥

मद्यमदप्रतीकारः ।

लीढ्वा घृतं शर्करया समेतं निषेवते यो मदिरां प्रकामम् ।
उद्दामदर्पाऽपि न तस्य सा स्यान्मदस्य हेतुः परिपीयमाणा ॥

कृत्रिमविषे कृष्णादिचूर्णम् ।

कृष्णाङ्कोल्लक्काथस्तच्चूर्णं वा दिनत्रयं पीतम् ।
पुंसां निहन्ति नूनं दारुणमपि कृत्रिमं गरलम् ॥ २७५ ॥

वृश्चिकविषे मनःशिलादिगुटिका ।

मनःशिलाकुष्ठकरञ्जबीजशिरीषकाश्मीरभवैः समांशैः ।
विनिर्मिता वृश्चिकसंभवस्य संहारिणी स्याद्गुलिका विषस्य ॥
अवतारयत्यधो नीतमूर्ध्वमारोपितं तु वर्धयति ।
दंशाद्वृश्चिकगरलं विधिबद्धं मुञ्जकान्मूलम् ॥ २७७ ॥

वृश्चिकविषेऽङ्गुलिकाधारणम् ।

द्विरदपुरीषसमुत्थच्छत्रकबहुकरकृताऽङ्गुलिका ।
वृश्चिकविषस्य कुरुते संक्रामणमाशु करविधृता ॥ २७८ ॥

वृश्चिकविषसंक्रामणी गुटिका ।

रविशलभवेश्मगोधापुरीषकुङ्कुमकुसुम्भहरितालैः ।
समनःशिलैः सकर्कटमांसार्करसैः कृता गुटिका ॥ २७९ ॥
वृश्चिकदंशस्थाने सकृदपि संश्लेषणं विधायादौ ।
अपरस्याङ्गे क्षिप्ता तद्विषसंक्रामणी भवति ॥ २८० ॥

वृश्चिकदंशे घृतसैन्धवयोगः ।

उष्णं घृतं सैन्धवचूर्णयुक्तं निपीतमाशु प्रशमं करोति ।
निश्वासकम्पश्रमवारितापरुजां जयेद्वृश्चिकदंशजाताम् ॥ २८१ ॥

खर्जूरकदंशे दीपतैलाभ्यङ्गः ।

अभ्यङ्गं दीपतैलेन दंशे खर्जूरकस्य यः ।
करोति न करोत्यार्तिं तस्य तत्संभवं विषम् ॥ २८२ ॥

रक्तकीटदंशे गुग्गुलुधूपनम् ।

दष्टं नरं रक्तककीटकेन प्रधूपयेद्गुग्गुलुना प्रकामम् ।
प्रस्वेदनाशे सघृताऽर्कपत्रपिण्डी च दंशे विधिवत्प्रदेया ॥२८३॥

मूषकविषे सुरसादियोगः ।

बहुशः सुरसाभाविततालककुवलयमनःशिलाचूर्णैः ।
मूषकविषमपि घोरं नश्यति पीतैर्न संदेहः ॥ २८४ ॥

मूषकविषे मार्गरजोनिक्षेपणम् ।

यस्याङ्गमाखोर्गरलेन पुंसः प्रदूषितं तस्य निगद्य नाम ।
रजः समादाय करेण मार्गाद्विनिक्षिपेत्तद्विषवेगशान्त्यै ।२८५।

मत्स्यदंशेऽङ्कोलपत्रधूपः ।

अङ्कोलवृक्षदलधूपविधानयोगा-
नाशं प्रयाति विषमाशु नरस्य मात्स्यम् ।

मत्स्यदंशे कटुतैलादिधूपः ।

धूपः पुनः कटुकतैलनृकेशसक्तु-
युक्तोऽस्य दंशपदके सुतरां प्रशस्तः ॥ २८६ ॥

गोधेरकविषे कन्थारिकामूलनस्यम् ।

उष्णोदकेन मसृणं दृषदि प्रघृष्टा
कन्थारिकातरुजटा कृतनावनानाम् ।
गोधेरकस्य गरलं नयति प्रशान्ति-
मर्कांशुतापभरमम्बुदमालिकेव ॥ २८७ ॥

शृङ्गिमत्स्यविषप्रतीकारः ।

शृङ्गिमत्स्यदशनव्रणाश्रितं सन्निहन्ति गरलं मुहुःसहम् ।
साज्यचिक्कणयवस्य पिण्डिका वेष्टनेन यदि चेन्दुरस्मयः ॥२८८॥

वरटीविषप्रतीकारः ।

शस्त्रेण दंशे परिघृष्यमाणे समुद्धृते तद्गतकण्टके च ।
फणिज्जनिर्यासभृतेऽथ दंशे भवेत्प्रणाशो वरटीविषस्य ॥२८९॥

मक्षिकादंशे मरिचादिलेपः ।

मरिचतगरशुण्ठीकेसरैस्तोयपिष्टै-
यदि भवति विलिप्तं मक्षिकादष्टमङ्गम् ।
विषमुपशममेति द्राक् तदानीं तदीयं
घृतयुतशतपुष्पासैन्धवालेपनाद्वा ॥ २९० ॥

मण्डूकविषे शिरीषपुष्पनस्यम् ।

शिरीषपुष्पं कुलिशद्रुमस्य क्षीरेण पिष्टं कृतनावनानाम् ।
विषं विनाशं नयति क्षणेन मण्डूकदंशप्रभवं नराणाम् ॥ २९१ ॥

अलर्कविषे धत्तूरयोगः ।

उन्मत्तकस्य स्वरसं पयश्च सर्पिर्गुडश्चेति विमिश्रितानि ।
पिबेत्पलद्वन्द्वमितानि यत्नादुन्मत्तकौलेयकदष्टगात्रः ॥ २९२ ॥

अलर्कविषे काकोदुम्बरिकायोगः ।

काकोदुम्बरिकामूलं धत्तूरकफलान्वितम् ।
पीतं तण्डुलतोयेन सारमेयविषापहम् ॥ २९३ ॥

अलर्कविषे धत्तूरफलयोगः ।

असनजटाजलपिष्टं यः खादति मातुलस्य फलमेकम् ।
उन्मत्तसारमेयप्रभवं विषमस्य शममेति ॥ २९४ ॥

सर्वदन्तनखविषे गोजिह्वायोगः ।

पिष्टा जलेन मधुना मिलिता ततोऽनु
गोजिह्विका हरति लेपविधौ प्रयुक्ता ।
सर्वाणि दन्तनखजानि विषाणि पुंसा-
मभ्युद्गमो दिनकरस्य यथा तमांसि ॥ २९५ ॥

सर्वविधनखदन्तविषे निम्बादिलेपः ।

पिचुमन्दशमीवटकल्कयुतं
क्वथितं जलमाशु विलेपनतः ।
नखदन्तविषाणि निहन्ति नृणां
विषमाण्यखिलान्यपि सत्यमिदम् ॥ २९६ ॥

लूताविषे मञ्जिष्ठादिलेपः ।

मञ्जिष्ठागजकेसरपत्रकरजनीप्रलेपिता लूता[1] ।
नश्यति गण्डस्तु नृणां कृतेङ्गुदीत्वक्प्रलेपानाम् ॥ २९७ ॥

विषसंपर्कजपिडकायां नलिनीयोगः ।

मूलानि बीजान्यथवा प्रपिष्टा-
न्यम्लारनालेन समं नलिन्याः ।
हरन्ति लेपेन तु बिन्दुकीट-
संपर्कजाताः पिटिकाः क्षणेन ॥ २९८ ॥

सविषपिटिकायां देवदाल्यादियोगः ।

सुरदालीकटुतुम्ब्योरन्यतरस्याः प्रपेषितं मूलम् ।
बीजं वा शुक्रहरं कीटकपिटिकोपसर्गहरम् ॥ २९९ ॥

दुष्टपिटिकायां करञ्जादिलेपः ।

नक्तमालतरुबीजविमिश्रैः सर्षपैस्तिलयुतैश्च पेषितैः ।
यान्ति दुष्टपिटिकाः प्रतिक्षणं लेपिता विलयमाशु देहिनाम् ॥ ३०० ॥

---

१ 'प्रलेपितं' ख. ।

पिटिकायां दन्त्यादिलेपः।

निकुम्भवातारिफलैर्जलेन संपेषितैर्यः कुरुते प्रलेपम्।
तस्योपशान्ति पिटिकाः प्रयान्ति समस्तदोषप्रभवाः क्षणेन॥

---

## अथ क्षुद्ररोगाधिकारस्त्रिंशत्तमः।

जालगर्दभे लेपः।

पयोदरवनीलिन्योर्मूलैः पिष्टैर्घृतान्वितैः।
जालगर्दभनाशाय प्रलेपं सकृदाचरेत्॥ ३०२॥

शीतलायां उत्तुङ्गकमूलादियोगः।

उत्तुङ्गकस्य[1] मूलं पिबन्ति तण्डुलजलेन ये पिष्टम्।
गोजिह्विकाजटां वा तेषां न भवन्ति शीतलिकाः॥२०३॥

शीतलायां चिञ्चापत्रादिलेपः।

चिञ्चादलेन सहितां रजनीं प्रपिष्य
ये शीतलेन सलिलेन सकृत्पिबन्ति।
तेषां भवन्ति न हि शीतलिकाः शरीरे
कार्यं त्विदं प्रथममेव तदुद्भवेऽपि॥ ३०४॥

शीतलायां श्लेष्मातकपत्रच्छेदः।

यावन्त्यः शीतलिका गात्रे यस्योत्थिताः प्रथममेव।
श्लेष्मातकपत्राणि छिन्द्यात्तावन्ति तन्नाम्ना॥ ३०५॥

शीतलिकोपसर्गे मधूदकयोगः।

विज्ञाय यः शीतलिकोपसर्गं प्रवृत्तमादौ मधुना विमिश्रम्।
पिबेज्जलं पर्युषितं नरोऽस्य नो संभवन्ति ज्वरदर्शनेऽपि॥३०६॥

---

१ 'उत्तुण्डिकस्य' ख.।

## अथ स्त्रीरोगाधिकार एकत्रिंशत्तमः ।

रक्तप्रदरे सुदर्शनामूलयोगः ।

स्त्रीणामजस्रं प्रदरामयस्य
प्रवृत्तिरुग्रा शममेति सद्यः ।
सुश्लक्ष्णपिष्टेन पयोन्वितेन
पीतेन मूलेन सुदर्शनायाः ॥ ३०७ ॥

असृग्दरे मूर्ध्नि शीतजलकुम्भधारणम् ।

आरोपिते मूर्धनि शीतवारि-
कुम्भे शमं गच्छति तत्क्षणेन ।
अस्रक्प्रवाहः प्रदरामयोत्थः
स्त्रीणां नदीस्रोत इवावरोधात् ॥ ३०८ ॥

असृग्दरे बलादिमूलयोगः ।

मूलानि तण्डुलजलेन समं बलायाः
पिष्ट्वा कुशस्य च समानि पिबेत्प्रयत्नात् ।

असृग्दरे कदलीफलयोगः ।

योषिद्रजस्य नितरां समभिप्रवृत्तौ
सर्पिर्युतानि यदि वा कदलीफलानि ॥ ३०९ ॥

असृग्दरे बदरचूर्णयोगः ।

समघृतगुडभागं श्लक्ष्णकर्कन्धुचूर्णं
प्रदरशमनमुक्तं खाद्यमानं वधूनाम् ।

असृग्दरे बलामूलयोगौ ।

यदि तु भवति पिष्टं वारिणा तण्डुलानां
तदुपशमयति द्राङ्मूलमेनं बलायाः ॥ ३१० ॥

मूलं बलायाः पयसा प्रपिष्टं जीमूतजं तण्डुलवारिणा वा ।
क्षौद्रेण[१] मिश्रं परिपीयमाणं स्त्रीणां वदन्ति प्रदरामयघ्नम् ॥३११॥

रक्तप्रदरे रक्तशालिपिष्टयोगः ।

क्षीरे स्थितं[२] लोहितशालिपिष्टं सुशीतलं माक्षिकसंयुतं च ।
पीतं निहन्ति प्रदरामयोत्थामतिप्रवृत्तामसृजः प्रवृत्तिम् ॥ ३१२ ॥

रक्तप्रदरे लाक्षायोगः ।

लाक्षा घृतेन क्वथिता निपीता निहन्ति सद्यः प्रदरं सदुग्धा ।
अन्यैरथाख्यायि कदाचिदेव मूर्धन्यपामार्गरसो निषिक्तः ।३१३।

रजस उपरोधे कटुत्रिकादिचूर्णम् ।

क्वाथे तिलानां विनिधाय पीतं कटुत्रिकब्राह्मणयष्टिचूर्णम् ।
निहन्ति सद्यः कुसुमप्ररोधं स्त्रीणामसृग्गुल्ममभिप्रवृद्धम् ॥३१४॥

रजोनिरोधे किण्वाद्या वर्तिः ।

किण्वकणागुडदन्तिमदनफलैः कटुतुम्बीफलबीजैः ।
यवक्षारयुतैः स्नुहीक्षीरभावितैश्च कल्पयेद्वर्तिम् ॥ ३१५ ॥
सा योनिकुहरनिहिता स्त्रीणामत्यन्तनष्टकुसुमानाम् ।
कुसुमप्रवृत्तिजननी निर्दिष्टा वृद्धभावेऽपि ॥ ३१६ ॥

पुत्रप्रसवार्थं नागकेशरयोगः ।

गोघृतेन सह नागकेसरं श्लक्ष्णचूर्णितमृतौ नितम्बिनी ।
गव्यदुग्धनिरता पिबेद्यदि स्यात्तदा नियतमेव वीरसूः ॥३१७॥

पुत्रसन्तानार्थं लक्ष्मणामूलनस्यम् ।

गृह्णाति लिङ्गाङ्कितलक्ष्मणाया मूलेन नस्यं सघृतेन या स्त्री ।
अवामनासाविवरे ऋतुस्था सा पुत्रिणी स्यात्पतिसंप्रयोगात् ३१८

१ 'लोध्रेण' ख. २ 'क्षीरोत्थितं' ख. ।

सन्तानार्थं मयूरशिखामूलयोगः ।

मूलं भुजङ्गारिशिखासमुत्थं दुग्धेन संयुक्तमृतौ निपीतम् ।
गर्भस्य हेतुः प्रमदाजनस्य स्याल्लक्ष्मणामूलमपीत्थमेव ॥ ३१९ ॥

गर्भवृद्ध्यर्थं सहचरमूलयोगः ।

यदि सहचरमूलं वारिणाऽतिप्रपिष्टं
पिबति यदि च गोधामांसमश्नाति योषित् ।
प्रतिदिनमभिवृद्धिं याति गर्भस्तदानीं
क्रमवशपरिपुष्टैर्धातुभिः पूर्यमाणः ॥ ३२० ॥

गर्भस्तम्भनार्थमुदुम्बरपर्णीमूलयोगः ।

स्तम्भयति गर्भमुदुम्बरपर्णीमूलं[1] जलेन परिपीतम् ।
ज्येष्ठुजलपिष्टमेतत्तत्कुरुते योनिमध्यगतम् ॥ ३२१ ॥

गर्भनिरोधार्थं पलाशबीजलेपः ।

ऋतौ घृतक्षौद्रयुतैः पलाशबीजैः प्रलेपं मसृणप्रपिष्टैः ।
करोति या स्त्री भगरन्ध्रमध्ये न सा भवेद्गर्भवती कदाचित् ३२२

गर्भनिरोधार्थं सैन्धवयोगः ।

तैलाविलं सैन्धवखण्डमादौ निधाय रण्डा[2] निजयोनिमध्ये ।
नरेण सार्धं रतमातनोति या सा न गर्भं लभते कदाचित् ३२३

गर्भनिरोधार्थं धत्तूरमूलबन्धनम् ।

उत्पाट्य पुष्येण हरप्रियस्य मूलं स्वकट्यां विनिबध्य गाढम् ।
रमेत नारीमविशङ्कितस्तां विद्वेष्टि गर्भस्य समुद्भवं या ॥ ३२४ ॥

गर्भपाते शर्करादियोगः ।

शर्कराविशतिलैः समांशकैर्माक्षिकेण सह भक्षितैः स्त्रियः ।
नास्ति गर्भपतनोद्भवं भयं पापभीतिरिव तीर्थसेवया ॥ ३२५ ॥

गर्भपाते लज्जावत्यादियोगः ।

लज्जावतीशाल्मलि[3]धातकीभिर्नीलाम्बुजक्षौद्रपयोन्विताभिः ।

---

१ 'उदुम्बरकर्णीमूलं' ख. । २ 'नारी' ख. । ३ 'सावरधातकीभिः' ख. ।

पीताभिरन्तर्जलमास्थितायाः
स्त्रियो न गर्भस्य भवेन्निपातः ॥ ३२६ ॥

गर्भपाते शालिपिष्टयोगः ।

उदुम्बरक्काथयुतं सिताढ्यं सुगन्धिशालिप्रभवं सितं च ।
या पिष्टमश्नाति न गर्भपातपीडामसौ विन्दति जातु नारी ३२७

गर्भपातेऽपरं योगद्वयम् ।

कुम्भकारकरकर्दमपांसुः क्षीरपुष्परससन्नियोजितः ।
गर्भपातमपहन्ति पानतो धारिताऽथ गिरिकर्णिकाजटा ॥३२८॥

गर्भवत्याः पुष्पदर्शने पारावतपुरीषयोगः ।

योषितः सततं यस्या गर्भवत्याः स्रवत्यसृक् ।
पारावतपुरीषं तां पाययेत्तण्डुलाम्भसा ॥ ३२९ ॥

गर्भपातव्यथायां नीलाब्जकन्दयोगः ।

सशर्करं नीलसरोजकन्दचूर्णं निपीतं सह माक्षिकेण ।
गर्भस्य पाते शमनं व्यथायाः शीतैश्च तोयैः परिषेचनानि ३३०

सुखप्रसवार्थं काञ्जिकादियोगः ।

क्वथितकाञ्जिकसंयुतमादृता सुरभिहिङ्गु विचूर्णितमङ्गना ।
पिबति या सितसैन्धवसंयुतं सुखयुतं प्रसवं लभते ध्रुवम् ।३३१।

सुखप्रसवार्थं अपामार्गादिमूलबन्धनम् ।

प्रत्यक्पुष्प्याः पारिभद्रस्य यद्वा यद्वा मूलं काकजङ्घासमुत्थम् ।
कट्यां बद्धं योषितां सत्प्रसूतिं कुर्यान्मूलं निम्बवृक्षोद्भवं वा ३३२

स्त्रीणां दुःप्रसवे योनावपामार्गमूलधारणम् ।

मूलं प्रत्यक्पुष्प्याः पाठाया वा निवेशितं गुह्ये ।
स्त्रीणां दुष्प्रसवानां प्रसवं कुरुते सुखेन खलु ॥ ३३३ ॥

यदि प्रत्यक्पुष्प्यास्त्रुट्यति मूलं तदर्थमुद्धरताम् ।
दुहितुर्जन्म तदानीं जानीयादन्यथा सूनोः ॥ ३३४ ॥

---

१ 'सुखमसौ' ख. ।

मूढगर्भे सर्पकञ्चुकीयोगः ।

पुटदग्धभुजगकञ्चुककज्जलमधुपूरिते क्षणद्वन्द्वात् ।[1]
सद्यो भवति विशल्या विमूढगर्भाऽपि गर्भवती ॥३३५॥

मूढगर्भे स्नुहीक्षीरयोगः ।

न्यस्तेन मूर्धनि स्नुधापयसाऽल्पकेन
स्त्रीणामुपैति सहसैव हि गर्भशल्यम् ।

मूढगर्भे शरपुङ्खामूलयोगः ।

मूलेन वा चिकुरमध्यगतेन बाण-
पुङ्खोद्भवेन सुखमेव भवेत्प्रसूतिः ॥ ३३६ ॥

गर्भपातार्थं श्वेतगिरिकर्णिकामूलयोगः ।

मूलेन शुक्लाचलकर्णिकाया गुह्यस्य मध्ये निहितेन सद्यः ।
गर्भस्य पातः क्रियते प्रसह्य कुर्यादिदं काकणिकाजटा वा ।३३७।

मृतगर्भपातार्थं उत्तरिणीमूलयोगः ।

गर्भं विपन्नमपि पातयति क्षणेन
स्त्रीणां जरायुपटलं च पृथक्करोति ।
पादे स्थितं वलयरूपतयोत्तरिण्या
मूलं व्यथातिशयविक्लवमानसानाम् ॥ ३३८ ॥

सूतिकाशूले तुलसीस्वरसयोगः ।

सुरसादलनिष्यन्दः पुराणगुडमद्यखण्डसंमिश्रः ।
पीतः प्रसूतिसमयादनन्तरं शूलमपहरति ॥ ३३९ ॥

मूढगर्भे योनौ पुनर्नवामूलधारणम् ।

मूलं पुनर्नवायाः सतैलमिषत्कृतं गुह्ये ।
गर्भं प्रवेपमानं सहसा स्त्रीणां बहिष्कुरुते ॥ ३४० ॥

---

१ 'भगे' इति शेषः ।

योनिशूले अपामार्गपुनर्नवायोगौ ।

अपामार्गपत्रद्वयं योनिमध्ये
निविष्टं क्षणाद्योनिशूलं निहन्ति ।
सुदुर्वारमप्येवमेव प्रयुक्तो
विदध्याद्रसस्तत्र पौनर्नवोऽपि ॥ ३४१ ॥

योनिशूले एरण्डतैलयोगः ।

एरण्डतैलेन परिप्लुता स्यात्कार्पासपिण्डी यदि योनिमध्ये ।
शूलं तदानीं शमयेत्तदीयं संयावको मुण्डिकया कृतो वा ३४२

मक्कल्ले यवक्षारयोगः ।

मक्कल्लः प्रशममुपैति कामिनीनां पीतेन क्वथितजलोपयोजितेन ।
अभ्युद्यन्नवयवशूकसंभवेन क्षारेण ध्रुवमथवा घृतान्वितेन ३४३

क्षीरवृद्ध्यर्थं कलमशालिविदारीकन्दयोर्योगौ ।

दुग्धान्वितं कलमतण्डुलसूक्ष्मचूर्णं
पीतं प्रसूतयुवतेः पयसोऽभिवृद्ध्यै ।
स्याद्दुग्धभोजनरतेरथवा विदारी-
कन्दोऽपि दुग्धसहितो दिनसप्तकेन ॥ ३४४ ॥

स्तन्यवृध्द्यर्थं बदरीमूलयोगः ।

स्यान्मूलमारामशृगालिकायाः संचर्व्य दन्तैर्धृतमास्यमध्ये ।
स्तन्यावहं वासरसप्तकेन स्तन्योत्थकीटक्षयकारणं च ॥ ३४५ ॥

स्तनव्यथायां कुमारीमूलयोगः ।

अपत्यनाशप्रभवां निहन्ति स्तनव्यथामाशु कृते प्रलेपे ।
स्त्रीणां हरिद्रासहितं कुमारीमूलं विशाला[1]प्रभवं कदाचित् ॥ ३४६ ॥

स्त्रीणां मध्यदेहस्य तनुत्वापादनार्थं योगद्वयम् ।

अतिमुक्तकस्य मूलं तक्रेण समं निपीतमबलानाम् ।
प्रतनु विधत्ते मध्यं कसेरुरथवा समध्वाज्यः ॥ ३४७ ॥

---

१ 'विशल्याप्रभवं' ख ।

किक्किसनाशार्थं वरुणपत्रोद्वर्तनम् ।

घृष्टानि गव्यशकृता प्रथमं ततश्च
पिष्टैर्जले वरुणकस्य दलैः प्रकामम् ।
उद्वर्तितानि सहसैव नितम्बिनीनां
नाशं प्रयान्ति सुमहान्त्यपि किक्किसानि ॥३४८॥

योनिशूले कार्पासिकायोगः ।

कार्पासास्थिविपक्वमाहिषघृताभ्यक्ता पुनश्चूर्णितैः
कार्पासास्थिभिरेव च प्रमृदिता कार्पासमूलोद्भवा ।
वर्तिर्योनिसमुत्थशूलशमनी सद्यो भवेद्योषितां

योनिभ्रंशे आखुमांसतैलम् ।

योनिभ्रंशहरं तथाऽऽखुपिशितैस्तैलं भवेत्साधितम् ॥ ३४९ ॥

निर्गतयोनिप्रवेशार्थं कारवेल्लीजटायोगः ।

योनिः स्त्रीणां निर्गताऽपि प्रवेशं
प्राप्नोत्यन्तः कारवेल्लीजटाभिः ।
संपिष्टाभिर्लेपनाद्गाढतां तु
प्राप्नोत्येषा शक्रगोपाज्यसिक्ता ॥ ३५० ॥

योनिदाढ्यार्थं मायाफलादियोगः ।

मायाफलैर्यद्घनसारपुष्पसारान्वितैर्लेपितमादरेण ।
तद्वृद्धभावेऽपि वलीविमुक्तं स्त्रीणां वराङ्गं श्लथतां न याति ॥

योनिशैथिल्ये मदयन्तिकादिप्रक्षालनम् ।

मदयन्तिकाश्वगन्धामोचरसैः साधितं जलं स्त्रीणाम् ।
प्रक्षालनेन योनेः सद्यः शैथिल्यमपहरति ॥ ३५२ ॥

योनिशैथिल्ये वार्ताकरसादियोगः ।

सूर्यांशुतप्तवार्ताकरसो भेकवसान्वितः ।
वन्याखुवसया युक्तो योनिलेपाच्छ्लथत्वहृत् ॥ ३५३ ॥

---

१ गर्भवत्याः सप्तमे मासे उदरे नाभेरधोभागे जायमानया कण्ड्वा यच्चर्मविदरणं भवति तत् 'किक्किसं' इत्युच्यते ।

योनिदौर्गन्ध्यहरणार्थं जात्यादिघृतम् ।

संयोजितं पल्लवपञ्चकेन जातीमधूकैर्मधुकान्वितैश्च ।
सूर्यांशुतप्तं घृतमङ्गनानामभ्यङ्गतो हन्ति वराङ्गगन्धम् ॥३५४॥

योनिपैच्छिल्यादौ मृणालादितैलम् ।

मृणालपद्मोत्पलबीजयुक्तं तैलं तथोशीरयुतं विपक्वम् ।
पैच्छिल्यशैथिल्यविगन्धतादिनाशं करोति स्मरमन्दिरस्य ।३५५।

योनिदौर्गन्ध्यादिहरणार्थं निम्बतोयप्रक्षालनादिविधिः ।

प्रक्षालितं सुबहुशः पिचुमन्दतोयै-
र्निम्बत्वचा तदनु निर्मितधूपकार्यम् ।
स्त्रीणां नितम्बकुहरं प्रविमुक्तगन्धं
शैथिल्यदोषरहितं च भवेत्प्रगाढम् ॥ ३५६ ॥

योनिदौर्गन्ध्यादौ कस्तूरीकादिधूपनम् ।

कस्तूरीघनसारकुङ्कुमनखैर्लाक्षातुरुष्कान्वितैः
श्रीखण्डागुरुकुष्ठमाक्षिकयुतैर्धूपो वराङ्गे कृतः ।
स्त्रीणां हन्ति विगन्धतां वितनुते सौगन्ध्यमत्युत्तमं
सौभाग्यं कुरुते मृदुत्वमसमं धत्ते तनोति श्रियम् ॥३५७॥

योनिलोमहरणार्थं हरितालादियोगः ।

हरितालभागपञ्चकमेको भागः पलाशभूतेश्च ।
भागश्च यवक्षारात्स्याल्लेपो योनिरोमहरः ॥ ३५८ ॥

योनिलोमहरणार्थं कोशातकीतैलाभ्यङ्गः ।

उत्पाट्य गुह्यप्रभवाणि रोमाण्यभ्यञ्जनं तत्र ततो विधेयम् ।
कोशातकीबीजसमुद्भवेन तैलेन लोम्नामपुनर्भवाय ॥ ३५९ ॥

योनिलोमहरणार्थं हालाहलपुच्छयोगः ।

चूर्णेन हालाहलपुच्छजेन विमिश्रितं सर्षपसंभवं यत् ।
तैलं स्थितं सप्तदिनानि तत्स्यादभ्यञ्जनाल्लोमविनाशकारी ३६०

दुर्गन्धाधोवायुनिवृत्त्यर्थं मातुलुङ्गत्वक्चूर्णम् ।

या प्रदोषसमये मधुमिश्रं बीजपूरकदलोद्भवचूर्णम् ।
खादयत्युपहता न भवेत्सा पूत्यधःपवननिर्गमवेगैः ॥ ३६१ ॥

---

## अथ बालरोगाधिकारो द्वात्रिंशत्तमः ।

बालानां ग्रहादिभयनिवारणार्थं धूपः ।

यस्ताम्रचूडविहगोभयपार्श्वपक्ष-
पिच्छैर्गवाज्यसहितैः कृतधूपनोऽङ्गे ।
आरभ्य जन्मदिवसाद्दिनसप्तकं
स्याद्बालस्य तस्य न कुतश्चन भीतिरस्ति ॥३६२॥

बालानां राक्षसादिभयनिवारणार्थं कुष्ठयोगः ।

उत्पन्नमात्रस्य शिशोर्वितीर्णं गवाज्यमिश्रं सितकुष्ठचूर्णम् ।
रक्षोविषव्याधिभयापहं स्यात्तथाऽङ्गलावण्यविधायकं च ॥३६३॥

बालग्रहोपशमार्थं मयूरशिखामूलबन्धनम् ।

शिशोः शिखिशिखाजटा दिनकरोपरागोद्धृता
गले प्रतनुसूत्रकग्रथनतः समायोजिता ।
निवारयति दूरतो ग्रहपिशाचरक्षोगणान्
ददाति बलमुत्तमं हरति सर्वरोगानपि ॥ ३६४ ॥

बालानां रक्षोभयनिवृत्त्यर्थं वचादिधूपः ।

वचाकुष्ठशङ्खाब्जलोहैः शरीरे शिशूनां धृतैर्यान्ति रक्षांसि नाशम् ।
कुनट्यर्कदुग्धमिश्रैः सकुष्ठैः प्रलेपोऽथवा निसमेषां विधेयः ॥

बालानां दन्तोद्भवरोगे गले निर्गुण्डीमूलबन्धनम् ।

प्राचीगतं पाण्डुरसिन्दुवारमूलं शिशूनां गलके निबद्धम् ।
करोति दन्तोद्भववेदनाया निःसंशयं नाशमकाण्डमेव ॥ ३६६ ॥

बालानां दन्तरोगे शङ्खपुष्प्यादिमूलबन्धनम् ।

शङ्खपुष्प्या यवासस्य बाह्णोर्धृतं
क्षीरिकायाः कदाचिच्छुभे वासरे ।
कङ्कालब्याः समादाय मूलं गले
योजितं दन्तरोगापहं स्याच्छिशोः ॥ ३६७ ॥

बालानां दन्तोद्भवरोगे कुररमांसाद्यवलेहः ।

कुररकपिञ्जलपिशितं शुष्कं चूर्णीकृतं कुमाराणाम् ।
माक्षिकयुतमवलेहाद्दन्तोत्थां च व्यथां हरति ॥ ३६८ ॥

बालानां सर्वातिसारे गजपिप्पल्यादिक्वाथः ।

मातङ्गपिप्पलीमूलरोध्रसावरनिर्मितः ।[1]
सर्वातीसारहृत्क्वाथः शिशोस्तच्चूर्णमेव वा ॥ ३६९ ॥

बालानां तृट्छर्द्यतिसारेषु प्रियङ्ग्वादिचूर्णम् ।

प्रियङ्गुसौवीरकमुस्तचूर्णं समाक्षिकं तण्डुलवारियुक्तम् ।
तृट्छर्द्यतीसारहरं वदन्ति दत्तं शिशूनां भिषजां वरिष्ठाः ॥३७०॥

बालानां शिरःक्रिमिषु बलामूलचूर्णप्रक्षेपः ।

शिरःसमुत्थेषु भवन्त्यरुंषु ये बालकस्य क्रिमयोऽतितीव्राः ।
स्नातस्य तच्छान्तिकृदस्य मूर्ध्नि भद्रौदनीमूलरजो निदध्यात् ॥

बालानां सकलनेत्ररोगेषु केशराद्यञ्जनम् ।

केशरदार्वीलाक्षासुवर्णगैरिकशिलाकृमिघ्नकृतम् ।
सकलनयनामयघ्नं बालानामञ्जनं कथितम् ॥ ३७२ ॥

बालानां पुष्ट्यर्थं वचादिसूर्यपाकतैलम् ।

वचाबलामूलकृतेन चूर्णेनोन्मिश्रितं सूर्यकरप्रतप्तम् ।
प्राहुः शिशूनां सकलामयघ्नमभ्यञ्जनात्पुष्टिकरं च तैलम् ॥३७३॥
अभ्यक्तमेतेन यवोत्थचूर्णबलाजटोद्वर्तितविग्रहं च ।
स्नातं बलामूलजलैश्च कोष्णैः पुष्टिः कुमारं स्वयमभ्युपैति ३७४

---

१. ' मातङ्गपिप्पलीवारिलोध्रधातकीश्रीफलैः ' ख. ।

बालानां नित्यकर्तव्या उपचाराः ।

सप्तच्छदार्कच्छदनक्तमालमूलैस्तुरङ्गारिजटासमेतैः ।
उत्सादिताङ्गः पशुमूत्रपिष्टैर्ह्रीवेरमुण्डीसलिलाभिषिक्तः ॥३७५॥
समूलपिष्टैः सहदेविकायास्तोयैश्च सम्यग्विहिताभिषेकः ।
प्रधूपितो गुग्गुलुहिङ्गुकेकिपिच्छैर्वचानिम्बदलैश्च नित्यम् ॥३७६॥
अङ्गारमध्याहितजातधूमनिर्गुण्डिकापत्रविधूपितश्च ।
मध्वाज्ययुक्तैः ककुभप्रसूनैर्विमिश्रितै रोचनया च वेणोः ॥३७७॥
कृतावलेहो वृषवारणेन्द्रविषाणमृत्कल्पितभालबिन्दुः ।
गोरोचनाबिन्दुविशेषकश्च विषघ्नमन्त्रागदरक्षितश्च ॥ ३७८ ॥
प्रशस्तरत्नैश्च सुवर्णबद्धैर्मुक्ताफलाद्यैः कृतजीवरक्षः ।
महौषधीभिश्च तथाविधाभिर्ग्रीवानिबद्धाभिरलङ्कृतश्च ॥ ३७९ ॥
मातृप्रभृत्याप्तजनेन सम्यक् स्निग्धेन नित्यं परिपाल्यमानः ।
संपूर्णिताशेषमनोभिलाषो दूरीकृतक्षुद्रजनः समन्तात् ॥ ३८० ॥
वह्न्यम्बुविद्युत्स्तनयित्नुशङ्कुदंष्ट्रिप्रपातादिषु चाप्रमत्तैः ।
संरक्ष्यमाणः स्वजनैर्मनोज्ञैः शुचिप्रदेशे विधृतश्च नित्यम् ३८१
दिने दिने याति शिशुः प्रवृद्धिं पतिर्नदीनामिव शुक्लपक्षे ॥ ३८२ ॥
इति कुलकम् ।

---

## अथ रसायनवाजीकरणाधिकारस्त्रयस्त्रिंशत्तमः ।

सौभाग्यप्राप्त्यर्थं कुष्ठादिचूर्णम् ।

कुष्ठं सुरा केसरमित्यमूनि श्लक्ष्णानि संचूर्ण्य घृतान्वितानि ।
यो लेढि नित्यं मधुसंयुतानि स स्यात्सुगन्धिः सुभगश्च लोके ॥

सौभाग्यप्राप्त्यर्थं द्वितीयं कुष्ठादिचूर्णम् ।

विशुद्धकुष्ठाम्बुजकेसरेभ्यः शतं पलानां विधिवत्प्रगृह्य ।
करम्बितं गव्यघृतान्वितेन क्षौद्रेण धान्ये निदधीत गुप्तम् ॥

संवत्सरार्धोषितमल्पमल्पं निखाद्यमानं दिनपूर्वभागे ।
सौभाग्यमग्र्यं कुरुते नराणामामोदमप्याहृतलोलभृङ्गम् ।३८५।

मेधावृद्ध्यर्थं कोशातक्यादिचूर्णम् ।

कोशातकीमामलकं वचां च संचूर्ण्य मध्वाज्ययुतानि योऽत्ति ।
पथ्याशिनस्तस्य दिनत्रयेण श्रुतं गृहीतुं भवतीह शक्तिः ।३८६।

पलाशबीजादिरसायनयोगः ।

पलाशबीजानि विडङ्गयुक्तान्युन्मिश्रितान्यामलकीफलानाम् ।
रसेन मध्वाज्ययुतानि पीत्वा वृद्धोऽपि मासात्तरुणत्वमेति ॥

रसायनार्थमामलकयोगाः ।

मासमामलकचूर्णमश्नतः साज्यमाक्षिकतिलैर्विमिश्रितम् ।
वाक्प्रवृत्तिरचिरात्प्रजायते कान्तिमच्च नवयौवनं वपुः ॥ ३८८ ॥

घृताम्लकशर्करातिलपलाशबीजानि यः
समानि शयनस्थितो मधुयुतानि खादेन्निशि ।
वलीपलितवर्जितस्तरुणनागतुल्यो बले
बृहस्पतिसमः पुमान् भवति सोऽचिरेण ध्रुवम् ॥ ३८९ ॥

चूर्णमामलकजातमम्भसा सर्पिषाऽथ मधुनाऽथवा निशि ।
पीयमानमुदराग्निनासिकाश्रोत्रनेत्रबलयौवनप्रदम् ॥ ३९० ॥

आयुर्वर्धनार्थं अङ्कोलबीजादितैलम् ।

अङ्कोलबीजसितसर्षपसम्भवं य-
न्निष्पीडनोक्तविधिना निपुणैर्गृहीतम् ।
तन्नस्यकर्मनिरतस्य करोति नूनं
विंशत्समाभ्यधिकवर्षशतान्तमायुः ॥ ३९१ ॥

कुष्ठाद्यं रसायनचूर्णम् ।

यः कुष्ठचूर्णं रजनीविरामे मध्वाज्यसंमिश्रितमत्ति नित्यम् ।
स मत्तमातङ्गबलः सुगन्धिर्वाग्मी चिरायुश्च भवेन्मनुष्यः ।३९२।

रसायनार्थमश्वगन्धायोगः ।

शिशिरे योऽश्वगन्धायाः कन्दचूर्णं पयोन्वितम् ।
मासमत्ति समश्वाज्यं स वृद्धोऽपि भवेद्युवा ॥ ३९३ ॥

लोहाद्यो रसायनो योगः ।

लोहाभ्रसूतकशिलाजतुकान्तलोह-
चक्राङ्कचूर्णसहितं विषचूर्णमत्ति ।
यः सन्ततं घृतमधूपहितं मनुष्यः
स स्याज्जरामरणरोगभयैर्विमुक्तः ॥ ३९४ ॥

वाजीकरो माषपायसः ।

माषैर्द्विधा विदलितैर्घृतसंप्लुतैर्यः
संसाध्य पायसमतुच्छघृतं सिताढ्यम् ।
अश्नात्यसावविरतं रतमातनोति
योषिच्छतेन सममप्रतिरुद्धवेगः ॥ ३९५ ॥

वानर्याद्यं वाजीकरं चूर्णम् ।

वानरीक्षुरमयूरकबीजैर्निस्तुषीकृतयवैश्च समांशैः ।
गव्यदुग्धसहितैः परिपीतैः स्त्रीशतेन कुरुते रतिलीलाम् ॥३९६॥

माषाद्यो वाजीकरो योगः ।

ये माषैः सह शालयः परिणताः संगृह्य तत्तण्डुलान्
गोधूमांश्च यवांश्च मागधिकया युक्तान् समांश्चूर्णयन् ।
तत्पूतं घृतपाचितं तदनु यः खादन्पिबेच्छर्करा-
युक्तं गव्यपयः शतं स रमते स्त्रीणां विमुक्तक्रमः ॥ ३९७ ॥
नरनारीप्रतिबद्धं चिकित्सितं गदितमिदमिहास्माभिः ।
गोमहिषीप्रभृतीनामतः परं किमपि वक्ष्यामः ॥ ३९८ ॥

## अथ पशुरोगाधिकारश्चतुर्स्त्रिंशत्तमः ।

गवां गर्भकरो लक्ष्मणादियोगः ।

संचर्व्य लक्ष्मणामूलं गोर्योनावनुलेपनम् ।
प्रकुर्यात्तेन सा गर्भं लभेताऽपि द्विहायनी ॥ ३९९ ॥

गवां जरायुपातनार्थं योगः ।

शृङ्गद्वये शाल्मलिवृक्षजातं गोदर्भखण्डं(?) सरसं निबद्धम् ।
अन्तर्निगूढं प्रसवावसाने बहिष्करोत्येव जरायुजालम् ॥ ४०० ॥

गवां जरायुपतनार्थं रक्तिकादियोगः ।

रक्तिकायाः फलं खण्डयित्वा शुभं
खण्डमेकं ततो गोर्मुखे निक्षिपेत् ।
तद्द्वितीयं तु योनावथैवं कृते
स्याज्जरायुः क्षणाद्बहिर्निश्रितं हि ॥ ४०१ ॥

गवां स्तन्यवर्धनार्थं गोजिह्विकादियोगः ।

गोजिह्विकापल्लवजीरकाभ्यां तक्रान्विताभ्यां परिपेषिताभ्याम् ।
वत्सं परस्या अपि संप्रलिप्तं या लेढि गौः प्रस्रवपीवरोधाः ॥
दृषदमपि पुरस्तादेतदालेपितां गौ-
र्यदि कथमपि पश्येज्जिह्वया तं लिहन्ति ।
क्षरति बहुविधं सा क्षीरमिन्दोर्मयूखै-
र्जलमुडुपतिकान्तः (क्षीरिता पुत्रिकेव?) ॥४०३॥

गवां व्रणात् क्रिमिपतनार्थं ब्रह्मदण्डीस्वरसयोगः ।

लिप्ते करेणोर्ध्वतलेन शृङ्गयुग्मे व्रणाद्गोः कृमयः पतन्ति ।
अधोमुखेन द्विजसंश्रितास्तु ते ब्रह्मदण्डीस्वरसेन तस्याः ॥४०४॥

गवां व्रणात् क्रिमिपतनार्थं गवाद्यस्थिबन्धनम् ।

अस्थ्ना शुनो गोरथवा महिष्याः कटौ निबद्धेन पतन्ति सद्यः ।
चिरोषिता अप्यतितीव्रमुण्डा व्रणान्तरालात्कृमयः समग्राः ॥

गवां व्रणात् क्रिमिपतनार्थं इन्द्रवारुणीयोगः ।

करद्वयप्रपीडितात्सुरेन्द्रवारुणीफलात् ।
च्युतेन वारिणा भृतं व्रणं त्यजन्ति जन्तवः ॥ ४०६ ॥

गवां मुखरोगचिकित्सा ।

उष्णाम्बुना क्षालितमात्रमन्तः सिद्धार्थतैलेन विलेपितं यत् ।
वक्त्रामया गोमुखमुत्सृजन्ति रालादलैर्वा प्रविलिप्तमन्तः ॥४०७॥

गवां नवनीतनाशनिवारणार्थं योगाः ।

शाम्यत्यकस्मात्सुरभीसुताया यद्वा महिष्या नवनीतनाशः ।
भाण्डे प्रलिप्ते च चिरान्तरालः शम्बूकपुष्पीकृतभस्मलेपैः४०८
गोनासदाहोद्भवभस्मपङ्कप्रलेपिते दोहनकृत्यभाण्डे ।
प्रशाम्यति म्रक्षणनाशदोषः क्षणेन गोर्वा यदि वा महिष्याः ॥

गोव्रजानां मरणोपसर्गनाशार्थं योगः ।

प्रशाम्यति द्राङ्मरणोपसर्गो निःसंशयं गोमहिषीव्रजानाम् ।
अस्थ्ना निखातेन गजस्य गोष्ठे तन्मूत्रसंप्रोक्षणमात्रतो वा ४१०

गवां ज्वरनाशार्थं तगरादिधूपः ।

नतगुग्गुलुकोशकृदाज्ययुतैर्य उशीरमयूरकसिन्धुभवैः ।
सममांस्युपकल्पितधूपविधिः स गवां ज्वरनाशकरोऽभिहितः ॥

गवां नवनीतरक्षार्थं मूर्ध्नि मूलिकाबन्धनम् ।

वत्सादन्या मूलं मूलं भूकुरुवकस्य वा मूर्ध्नि ।
गोमहिषीणां बद्धं प्रभवति नवनीतरक्षायै ॥ ४१२ ॥

वाजिनां नेत्ररोगप्रतिकारः ।

अन्धोऽपि वाजी नवनीतपूर्णकोष्णाम्बुसंसिक्तदृगीक्षते द्राक् ।
गुञ्जाफलैर्वा मसृणप्रपिष्टैः क्षणं समापूरितनेत्रयुग्मः ॥ ४१३ ॥

सुश्लक्ष्णचूर्णीकृतबाणपुङ्खापत्रैः कृतः सैन्धवसंयुतो यः ।
स वेसराणां विनिहन्ति पिण्डः सद्यो जलस्फोटभयं हयानाम् ॥
अनेन तेषां बलमुज्ज्वलत्वं संजायते शीघ्रतरा गतिश्च ।

पशूनां कण्डुनिवारणार्थं गृहकुमारीपत्रलेपः ।

पत्रं प्रलेपाल्लवणेन कण्डुं निवारयेद्वेश्मकुमारिकायाः ॥ ४१५ ॥

वडवायाः शिशौ स्नेहवर्धनार्थं योगः ।

विधायादौ कुष्ठं दृषदि मसृणं तत्र लवणं
क्षिपेत्सिन्धूद्भूतं सह कुसुमसारेण मतिमान् ।
तदालिप्तं सद्यस्तुरगशिशुमग्रे विनिहितं
समालेढि प्रेम्णा यदि विषमशीलाऽपि वडवा ॥४१६॥

विभिन्नवर्णपारावतोत्पत्तिकरणम् ।

पारावतेभ्यः क्रमशः कुसुम्भमसूरमुद्गैः परिपोषितेभ्यः ।
भवन्त्यपत्यानि सितारुणानि नीलच्छवीनि च वधुप्रसङ्गात् ॥

ग्रन्थोपसंहारः ।

समस्तपाथोनिधिवीचिसंचयप्रवर्तितान्दोलनकेलिकीर्तिना ।
प्रकाशितो भोजनृपेण देहिनां हिताय नानाविधयोगसङ्ग्रहः॥४१८

इति श्रीमहाराजभोजराजविरचितो राजमार्तण्डनामा योगसारसंग्रहः संपूर्णः ॥

समाप्तोऽयं ग्रन्थः ॥



आयुर्वेदीयग्रन्थमाला ।

पञ्चमं पुष्पम् ।

श्रीरावणकृता

# नाडीपरीक्षा ।

ज्योतिर्वित्पद्माकरतनूजविनायकशर्मणा
संशोधिता ।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा
प्रकाशिता ।



सन १९२४.

# प्रस्तावना ।



विदितचरमेवैतद्वैद्यविद्याविदां यत्किल सत्स्वपि बहुषु नाडीनिबन्धेषु रावणकृतेयं नाडीपरीक्षा लघुरपि मूर्धन्येति । रावणश्चायं लङ्कापतिरेवेति जनश्रुतिः । एवं चाखिलसद्वैद्यकौस्तुभे जनार्दनः—

"नार्याः सव्यकरे परीक्षणविधिः पुंसः शये दक्षिणे
लङ्केशादिविपश्चितां मतमिदं लब्धं स्वभावाद्भवेत्"

[स० वै० कौ० १।१९]

रावणविरचिततया प्रथिता वैद्यकग्रन्था एते चत्वारः—

१ अर्कप्रकाशः (दशशतकात्मकः),

२ उड्डीशतन्त्रम् (दशपटलात्मकम्),

३ कुमारतन्त्रम्,

४ नाडीपरीक्षा चेति ।

एतेष्वियं नाडीपरीक्षा सुदुर्लभत्वान्नाद्यापि केनापि मुद्रिता । एतस्या एकमेव पुरातनं हस्तलिखितं पुस्तकमस्माभिर्विविधयत्नैरासादितम् । अशुद्धं तद्यावच्छक्यं संशोध्येदानीं वैद्यश्रीयादवशर्मणां कृपयोपाह्रियत आयुर्वेदीयग्रन्थमालायाः प्रियपाठकगणेभ्य इति शिवम् ।

ज्येष्ठ सुदि १,
शके १८३४.

विनायक पद्माकर जोशी,
दहिसात अमरावती.

श्रीरावणकृता

# नाडीपरीक्षा ।

अगणितमहिमायै साधकानन्ददायै
सकलविभवसिद्ध्यै दुर्गतिध्वान्तहन्त्र्यै ।
अमृतजलधिजायै जातरूपात्ममूर्त्यै
मधुरिपुवनितायै चेन्दिरायै नमोऽस्तु ॥ १ ॥

गदाक्रान्तस्य देहस्य स्थानान्यष्टौ परीक्षयेत् ।
नाडीं मूत्रं मलं जिह्वां शब्दस्पर्शदृगाकृतीः ॥ २ ॥
रुग्णस्य मुग्धस्य विमोहितस्य दीपः पदार्थानिव जीवनाडी ।
प्रदर्शयेद्दोषजनिस्वरूपं व्यस्तं समस्तं युगलीकृतं च ॥ ३ ॥
अस्ति प्रकोष्ठगा नाडी मध्ये काऽपि समाश्रिता ।
जीवनाडीति सा प्रोक्ता नन्दिना तत्त्ववेदिना ॥ ४ ॥
अङ्गुष्ठमूलसंस्था तु विशेषेण परीक्ष्यते ।
सा हि सर्वाङ्गगा नाडी पूर्वाचार्यैः सुभाषिता ॥ ५ ॥
एकाङ्गुलं परित्यज्याधस्तादङ्गुष्ठमूलतः ।
यत्नवान् तां परीक्षेत ह्यभ्यासादेव लक्ष्यते ॥ ६ ॥
अङ्गुष्ठमूलभागे या धमनी जीवसाक्षिणी ।
तच्चेष्टया सुखं दुःखं ज्ञेयं कायस्य पण्डितैः ॥ ७ ॥
स्त्रीणां भिषग्वामहस्ते वामपादे च यत्नतः ।
( पुंसां दक्षिणभागे च नाडीं विद्याद्विशेषतः । )
गुल्फस्याधोऽङ्गुष्ठभागे पादे, त्वङ्गुष्ठमूलतः ॥ ८ ॥
एकाङ्गुलं परित्यज्य मणिबन्धे परीक्षयेत् ।
अधः करेण निष्पीड्य त्रिभिरङ्गुलिभिर्मुहुः ॥ ९ ॥

---

१ 'हस्तप्रकोष्ठबाह्यस्य' इति पा० । २ एतदवगमयति स्यात्कोऽपि नन्दिकृतो नाडीपरीक्षाग्रन्थ इति ।

लघु वामेन हस्तेन चालम्ब्यातुरकुर्परम् ।
स्फुरणं नाडिकायास्तु शास्त्रेणानुभवैर्निजैः ॥ १० ॥
संप्रदायेन वा यत्नात्परीक्षेत भिषक्तमः ।
आदौ वातवहा नाडी मध्ये वहति पित्तला ॥ ११ ॥
अन्ते श्लेष्मविकारेण नाडिकेति त्रिधा मता ।
वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्जनीतले ॥ १२ ॥
पित्ते व्यक्ताऽथ मध्यायां, तृतीयाङ्गुलिगा कफे ।
तर्जनीमध्यमामध्ये वातपित्ताधिके स्फुटा ॥ १३ ॥
तर्जन्यनामिकामध्ये व्यक्ता वातकफे भवेत् ।
मध्यमानामिकामध्ये स्फुटा पित्तकफे भवेत् ॥ १४ ॥
अङ्गुलित्रितयेऽपि स्यात्प्रव्यक्ता सन्निपाततः ।
वाते वक्रगतिर्नाडी, चपला पित्तवाहिनी ॥ १५ ॥
स्थिरा श्लेष्मवती प्रोक्ता, सर्वलिङ्गा च सर्वगा ।
श्लेष्मणा स्तिमिता स्तब्धा, मिश्रां मिश्रैस्तु लक्षयेत् ॥१६॥
वातोद्रेके गतिं कुर्याज्जलौकासर्पयोरिव ।
पित्तोद्रेके तु सा नाडी काकमण्डूकयोर्गतिम् ॥ १७ ॥
हंसस्येव कफोद्रेके गतिं परावतस्य वा ।
नाडी धत्ते त्रिदोषे तु गतिं तित्तिरलावयोः ॥ १८ ॥
कदाचिन्मन्दगा नाडी कदाचिद्वेगवाहिनी ।
दोषद्वयोद्भवे रोगे विज्ञेया सा भिषग्वरैः ॥ १९ ॥
क्वचिन्मन्दां क्वचित्तीव्रां त्रुटितां वहते क्वचित् ।
क्वचित्सूक्ष्मां क्वचित्स्थूलां नाड्यसाध्यगदे गतिम् ॥ २० ॥
त्वगूर्ध्वं दृश्यते नाडी प्रवहेदतिचञ्चला ।
असाध्यलक्षणा प्रोक्ता पिच्छिला चातिचञ्चला ॥ २१ ॥
अङ्गुष्ठादूर्ध्वसंलग्ना समा च वहते यदि ।
निर्दोषा सा च विज्ञेया नाडी लक्षणकोविदैः ॥ २२ ॥
स्थित्वा स्थित्वा वहति या सा नाडी मृत्युदायिनी ।

अतिशीता च या नाडी रोगिणः प्राणहारिणी ॥ २३ ॥
उष्णा वेगवती नाडी ज्वरकोपे प्रजायते।
उद्वेगक्रोधकामेषु, भयचिन्तोद्ये तथा ॥ २४ ॥
भवेत्क्षीणगतिर्नाडी ज्ञातव्या वैद्यसत्तमैः ।
क्षीणधातोश्च मन्दाग्नेर्भवेन्मन्दतरा ध्रुवम् ॥ २५ ॥
गुर्वी सोष्णा च रक्तेन पूर्णा नाडी प्रजायते।
सामा गुर्वी भवेन्नाडी मन्दाऽसृक्पूर्णिताऽपि च ॥ २६ ॥
लघ्वी वहति दीप्ताग्नेस्तथा वेगवती मता ।
सुखिनस्तु भवेन्नाडी स्थिरा बलवती तथा ॥ २७ ॥
चपला क्षुधितस्य स्यात्स्थिरा तृप्तस्य सा भवेत् ।
स्थिरा श्लेष्मवती नाडी वहती प्रदरे तथा ॥ २८ ॥
अजीर्णे तु भवेन्नाडी कठिना पूरिता[1] जडा।
चपला रसजे दीर्घा पित्ते वेगवती तथा ॥ २९ ॥
प्रसन्ना च द्रुता शीघ्रा[2] क्षुद्भिर्नाडी प्रवर्तते ।
ज्वरे तीव्रा प्रसन्ना च नाडी वहति पित्ततः ॥ ३० ॥
स्निग्धा रसवती प्रोक्ता रसे मूर्च्छाविधायिनी ।
भाविरोगप्रबोधाय स्वस्थे नाडीपरीक्षणम् ॥ ३१ ॥
भारप्रहारमूर्च्छाभयशोकविसूचिकाभवा[3] नाडी ।
संमूर्च्छिताऽपि गाढं पुनरपि सा जीवितं भजते ॥ ३२ ॥
मेहेऽर्शसि मलाजीर्णे शीघ्रं तु स्पन्दते धरा[4] ।
गुर्वी वातवहां नाडीं गर्भेण सह लक्षयेत्[5] ॥ ३३ ॥
पित्तवायोस्तत्र वाच्या लघुना गौरवेण च (?) ।
आमपक्वविभागश्च दिनमासादिकं बुधैः ॥ ३४ ॥

---

१ 'परितो' इति पा० । २ 'शुद्धा' इति पा० । ३ 'प्रमुखकारणा-नाडी' इति पा० । ४ 'स्पन्दते शीघ्रमागत्य मलाजीर्णे प्रवर्तते' इति पा० । ५ 'गुर्वी वातवहा नाडी गर्भिण्या वहते क्वचित्' इति पा० ।

सैव पित्तवहा लघ्वी नष्टगर्भा वदेच्च ताम् ।
दोष्पीडावक्रतायां च प्रहारे त्रसनेन च ॥ ३५ ॥
व्यायामेऽट्टाट्टहासे च नैति स्फुरणतां धरा ।
गम्भीरा या भवेन्नाडी सा भवेन्मांसवाहिनी ॥ ३६ ॥
दीर्घा कृशा वातगतिर्विषमा वेपते धरा ।
जीवघ्नी वाऽसमैश्चिह्नैर्व्याकुलाऽजीर्णसंचया ॥ ३७ ॥
शीतार्तस्यार्द्रगात्रस्य चिरात्सूक्ष्माऽथ मन्थरा ।
शयानस्य बलोपेता नाडी स्फुरणमञ्चति ॥ ३८ ॥
किञ्चिदाभुग्नगतिका स्वस्थाने वहतीरणे ।
सूक्ष्मरूपा[1] स्फुटा शीता स्वस्थानस्थे कफे तथा ॥ ३९ ॥
पित्ते स्वस्थानगे तद्वत्प्रबला सरला चला ।
अनृजुर्वातकोपेन चण्डा पित्तप्रकोपतः ॥ ४० ॥
सरला श्लेष्मकोपेन नाडी दोषैः पृथक् स्मृता ।
कफे हीनेऽधिकं वातगतिं वहति नाडिका ॥ ४१ ॥
हीने वाते कफे चातिस्वल्पे पित्ते चिरात्स्फुटा ।
सौम्या सूक्ष्मा स्थिरा मन्दा नाडी सहजवातजा ॥ ४२ ॥
ईषच्चपलवक्रा च कठिना वातपित्तजा ।
स्थूला च चञ्चला शीता मन्दा स्याच्छ्लेष्मवातजा ॥ ४३ ॥
सूक्ष्मा शीता स्थिरा नाडी पित्तश्लेष्मसमुद्भवा ।
पित्ताधिक्ये च चपला कटुकादेश्च भक्षणात् ॥ ४४ ॥
निरन्तरं खरं रूक्षमन्नमश्नाति वातलम् ।
रूक्षा वातोल्बणा तस्य नाडी स्यात्पित्तसंनिभा ॥ ४५ ॥
नाडी तन्तुसमा मन्दा शीतला सर्वदोषजा ।
रिरंसोरुज्झितरतेश्चलतोऽपि च वातवत् ॥ ४६ ॥
रुद्धवेगस्य बालस्य शल्यविद्धस्य पित्तवत् ।
निद्रालोर्मेदुरस्यापि कफवत्तृसदद्मयोः ॥ ४७ ॥
समा सूक्ष्मा ह्यणुस्पन्दा मलाजीर्णे प्रकीर्तिता ।
विषमा कठिना स्थूला मलशेषात्प्रकीर्तिता ॥ ४८ ॥

---

१ 'सूक्ष्मरूक्षा' इति पा० ।

रक्तादजीर्णाद्भ्रमनाद्विरेकाद्बीजक्षयाद्रक्तस्रुतेर्निबन्धात् ।
संमूर्च्छनाद्यैर्जठराग्निमान्द्यान्नाडी वहेत्तन्तुचला च जन्तोः ॥
निरामा सूक्ष्मगा ज्ञेया कफेन परिपूरिता ।
नाडी तन्तुसमा मन्दा शीतला सर्वदोषजा[1] ॥ ५० ॥
मन्दं मन्दं[2] मिताहारे कफपित्तसमन्विता ।
बहुदाहकरे रक्ते प्लावयन्ती विशेषतः ॥ ५१ ॥
मध्ये करे[3] वहेन्नाडी यदि दीर्घा पुनर्द्रुता[4] ।
तदा नूनं मनुष्यस्य रुधिरापूरिता मलाः ॥ ५२ ॥
वक्रा च चपला शीतस्पर्शा वातज्वरे भवेत् ।
द्रुता च सरला दीर्घा शीघ्रा पित्तज्वरे भवेत् ॥ ५३ ॥
मन्दा च सुस्थिरा शीता पिच्छिला श्लेष्मके भवेत् ।
मृणालसरला दीर्घा नाडी पित्तज्वरे वहेत् ॥ ५४ ॥
शीघ्रमावहते मन्दं मलाजीर्णात्मकीर्तिता ।
स्थूला च कठिना शीघ्रं स्पन्दतेऽतीव शान्तये[5] ॥ ५५ ॥
पुरा मन्दा च शनकैश्चण्डतां याति नाडिका ।
ज्वरं शैत्यं वेपथोर्वा[6] संभवं व्रजति द्रुतम् ॥ ५६ ॥
इयमैकाहिकादीनां व्याधीनां जननी मता ।
भूतग्रहे सिराऽलक्ष्या भाविन्यैकाहिके ज्वरे ॥ ५७ ॥
कदाचिन्मन्दगमना कदाचिद्वेगवाहिनी ।
द्विदोषकोपतो ज्ञेया हन्ति च स्थानविच्युता ॥ ५८ ॥
रक्तपित्ते वहेन्नाडी मन्दा च कठिना ऋजुः ।
श्लेष्मकासे स्थिरा मन्दा श्वासे तीव्रगतिर्भवेत् ॥ ५९ ॥
नाडी नागगतिश्चैव[7] रोगराजे प्रकीर्तिता ।
मदात्यये च सूक्ष्मा स्यात्कठिना परितो जडा ॥ ६० ॥

१ 'शीतदोषजा' इति पा० । २ 'स्पन्दति चाहारे कफवातसमन्विता' इति पा० । ३ 'ज्वरं' इति पा० । ४ 'पुनर्नवा' इति पा० । ५ 'सादयेत्' इति पा० । ६ 'ज्वरः शैत्याद्वेपथुमान्' इति पा० । ७ 'नानागतिश्चैव' इति पा० ।

अर्शोरोगे स्थिरा मन्दा कचिद्वक्रा कचिदृजुः ।
अतिसारे तु मन्दा स्याद्धिमकाले जलौकवत् ॥ ६१ ॥
मांसवृद्धा तु सा धत्ते ज्वरातीसारयोर्गतिम् ।
मृतसर्पसमा नाडी ग्रहणीरोगमादिशेत् ॥ ६२ ॥
मूत्राघाते मुहुर्भेदस्फुरणे संप्लुता भवेत् ।
प्रमेहे च जडा सूक्ष्मा मुहुराप्यायते सिरा ॥ ६३ ॥
पाण्डुरोगे चला तीव्रा दृष्टादृष्टविहारिणी ।
कुष्ठे तु कठिना नाडी स्थिरा स्यादप्रवृत्तिका ॥ ६४ ॥
वातरोगे स्थिरा च स्यादावृते सर्वलक्षणा ।
बलासे स्फुरणोपेता[1] सूक्ष्मा द्रुतगतिर्भवेत् ॥ ६५ ॥
ऊर्ध्वजन्तुविकारेषु यथादोषबलेषु च ।
विज्ञाय लक्षणं तेषां भिषग्ब्रूयाद्धरागतिम् ॥ ६६ ॥
अर्केन्दुकठिना सोष्णा स रोगी शोणिताश्रितः ।
सन्निपातधरा नाडी शीतोष्णाभ्यां गतौ स्फुटा ॥ ६७ ॥
अतितन्वी सुवेगा च सन्निपाते प्रशाम्यति ।
शीतला स्निग्धवेगा च रोगिणस्तस्य मारिका ॥ ६८ ॥
स्थित्वा स्थित्वा चलन्ती या सा स्मृता प्राणनाशिनी ।
अतितीक्ष्णा च शीता च जीवितं हन्त्यसंशयम् ॥ ६९ ॥
शीघ्रा नाडी प्रलापान्ते दिनार्धेऽग्निसमो ज्वरः ।
दिनैकं जीवितं तस्य द्वितीये मरणं ध्रुवम् ॥ ७० ॥
मृत्युकाले भवेन्नाडी जीर्णा[2] डमरुकोपमा ।
तन्तुमन्दोपरिष्टात्तु ह्यधस्ताद्वक्रतां गता ॥ ७१ ॥
यात्युच्चकाऽस्थिरा या च या चेयं मांसवाहिनी ॥ ७२ ॥
याऽतिसूक्ष्मा च वक्रा च तामसाध्यां विनिर्दिशेत् ।
स्थिरा नाडी मुखे यस्य विद्युद्द्युतिरिवेक्ष्यते ॥ ७३ ॥

---

१ 'मलोपेता' इति पा० । २ 'शीर्णा' इति पा० ।

दिनैकं जीवितं तस्य द्वितीये मरणं ध्रुवम् ।
मन्दं मन्दं कुटिलकुटिलं व्याकुलव्याकुलं वा
स्थित्वा स्थित्वा वहति धमनी याति नाशं च सूक्ष्मा ।
नित्यस्थानात्स्खलति पुनरप्यङ्गुलिं संस्पृशेत्सा
भावैरेवं बहुतरविधैः सन्निपातादसाध्या ॥ ७४ ॥
पूर्वं पित्तगतिं प्रभञ्जनगतिं श्लेष्माणमाबिभ्रतीं
स्वस्थानभ्रमणं मुहुर्विदधतीं चक्राधिरूढेव या ।
तीव्रत्वं दधतीं कलापिगतिकां सूक्ष्मत्वमातन्वतीं
नो साध्यां धमनीं वदन्ति विविधा नाडीगतिज्ञानिनः ॥
काष्ठकुट्टो यथा काष्ठं कुट्टयत्यतिवेगतः ।
स्थित्वा स्थित्वा चलति या सन्निपातेन जायते ॥ ७६ ॥
कम्पते स्पन्दते तन्तुवत्पुनश्चाङ्गुलिं स्पृशेत् ।
तामसाध्यां विजानीयान्नाडीं दूरेण वर्जयेत् ॥ ७७ ॥
मुखे नाडी वहेत्तीव्रा कदाचिच्छीतला वहेत् ।
आयाति पिच्छिलः स्वेदः सप्तरात्रं न जीवति ॥ ७८ ॥
देहे शैत्यं मुखे श्वासो नाडी तीव्राऽतिदाहिका ।
मासार्धं जीवितं तस्य नाडीविज्ञानभाषितम् ॥ ७९ ॥
मुखे नाडी यदा नास्ति मध्ये शैत्यं बहिः क्लमः ।
तन्तुमन्दा वहेन्नाडी त्रिरात्रं न स जीवति ॥ ८० ॥
पूर्वं नाडी तु वेगोत्था ततः परदिने यदि ।
शीता विहतवेगा स्यात्सन्निपातात्तदा भयम् ॥ ८१ ॥
ज्वरो वह्निसमोऽत्यर्थं भवेत्पूर्वदिने यदि ।
निरन्तरं यदा नाडी लवेनैकेन संचरेत् ॥ ८२ ॥

---

१ 'नित्यं कण्ठे स्फुरति' इति पा० । २ 'तथा नाडी' इति पा०
३ 'नित्यं पुनः स्पृशति चाङ्गुलिम्' इति पा० ।

मुखस्थाने तु रुग्णस्य चतुर्थे मरणं दिने ।
मुखे त्रुटत्यकस्माच्च न किञ्चिद्दृश्यते यदा ॥ ८३ ॥
तदा विद्यात्स रुग्णानां द्वितीये मरणं ध्रुवम् ।
यदा नाडी हतावेगा स्पन्दते नैव लभ्यते ॥ ८४ ॥
तदा दिनस्य मध्ये तु मरणं रोगिणो भवेत् ।
निरन्तरं मुखस्थाने भ्राम्येद्भ्रमरुकोपमा ॥ ८५ ॥
चला नाडी तु रुग्णस्य दिनैकान्मरणं भवेत् ।
अतिसूक्ष्मा पृथक्शीघ्रा सवेगाभरिताऽऽद्रिका ॥ ८६ ॥
भूत्वा भूत्वा म्रियेतैव तदा विद्यादसाध्यताम् ।
स्वस्थस्य तलगा पूर्वं नाडी स्यादप्रपञ्चनात् ॥ ८७ ॥
भूयः प्रपञ्चनात्सूक्ष्मा त्रिदिनैर्म्रियते नरः ।
ऊर्ध्वहस्तं तडिद्वेगा सप्ताहैर्म्रियते नरः ॥ ८८ ॥
शान्ते नाडीवि (प्र) ताने शमनमुपगते चेन्द्रियाणां प्रचारे
सूक्ष्मे वाऽनुष्णरूपां विकृतिमुपगते सर्वथा शीतभावे ।
शून्ये चित्तात्ममार्गे स्फुरणविरहिते नष्टसंज्ञाप्रचारे
सूर्ये चन्द्रात्मसंस्थेऽवगतगुणगणे पञ्चतेयं प्रवाच्या(?)८९
नाड्याधिप्रवरं प्रयाति विकृतिं शान्तिं परां सूक्ष्मतां
शान्तिर्याति विपर्ययं च यदि वा हित्वा स्वमार्गानिलम् ।
अज्ञानेऽपि हि शून्यतामुपगते ज्ञानेन्द्रिये शाम्यति
सूर्याचन्द्रमसौ तथा च पिहिते पञ्चत्वमेति स्फुटम्(?)९०
शुष्कोष्ठः श्यावकोष्ठोऽप्यसितरदनखः शीतनासाप्रदेशः
शोणाक्षश्चैकनेत्रो लुलितकरपदः श्रोत्रपातित्ययुक्तः ।
शीतः श्वासोऽथवोष्णः श्वसनसमुदयी शीतगात्रः सकम्पः
सोद्वेगो निष्प्रपञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले ९१

१ 'ऽप्यतिकृशा' इति पा० ।

पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति ।
पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले ॥
वातावर्तितमानुषेऽतिविषमं संस्पन्दते नाडिका
पित्तस्यैव समागमं न कुरुते मन्दा च मन्दोदये ।
प्राचुर्यं भजते रसाश्रयवसात्क्षीणा रसेनोज्झिता
नीत्वा श्वाससुपैति शान्तिमचलैः स्वैरन्तकाले नृणाम् ९३
स्पन्दते चैकमानेन त्रिंशद्वारं यदा धरा ।
स्वस्थाने हि तदा नूनं रोगी जीवति नान्यथा ॥ ९४ ॥
शरीरं शीतलं नाडी नूनं चोष्णतरा भवेत् ।
ज्वरमन्तर्गतं तस्य जानीयाद्भिषगुत्तमः ॥ ९५ ॥
मृत्यून्मुखां धरां ज्ञात्वा न चिकित्सेद्वदातुरम् ।
(रामनामौषधं तत्र कारयेत्पारलौकिकम् ॥ ९६ ॥)

॥ इति श्रीरावणकृता नाडीपरीक्षा संपूर्णा ॥

---

Printed by Vaidya Bhagvanlal Tribhuvan, at Subodhini P. Press,
51, Bazar Gate, Fort, Bombay,
and
Published by Vaidya Jadavji Tricumji Acharya,
18, Boar Bazar Street, Fort, Bombay.

आयुर्वेदीयग्रन्थमाला ।

अष्टमं नवमं च पुष्पम् ।

वैद्यवरश्रीकालिदासविरचिता

# वैद्यमनोरमा ।

तथा

# धाराकल्पः ।

संशोधकः ।

ब्रह्मश्री ते. नीलकण्ठशर्मा

तथा

आचार्योपाह्वत्रिविक्रमात्मजो यादवशर्मा ।

द्वितीयं संस्करणम् ।

---

AYURVEDIYA-GRANTHAMALA.

Nos. 8-9.

# VAIDYA MANORAMA

BY

KALIDAS

AND

# DHARAKALPA.

EDITED BY

BRAHAMASHRI T. NILKANTH SHARMA.

AND

**VAIDYA JADAVJI TRICUMJI ACHARYA,**

SECOND EDITION.

18, BORA BAZAR STREET, FORT, BOMBAY.

1924.

# भूमिका.



वैद्यमनोरमा इति प्रसिद्धोऽयं ग्रन्थो भिषग्वरकालिदासविरचितः। सोऽयं कालिदासः केरलदेशोत्पन्न इति ज्ञायते, वैद्यमनोरमायां केरलदेश एव प्रसिद्धानां बहूनां भेषजद्रव्याणामुपादानात्। अस्मिन् ग्रन्थे विंशतिपटलेषु ज्वरादिरोगाणां चिकित्सा अन्यग्रन्थेषु प्रायोऽनुक्तैः स्वल्पायाससाध्यैर्भूरिगुणैर्दृष्टप्रत्ययैश्च प्रयोगैरुक्ता। ग्रन्थस्यास्यैकं पुस्तकं केरललिपिलिखितानेकपुस्तकान्यवलम्ब्य देवाक्षरैर्लिखित्वा मदीयपरमसुहृद्भिः स्यानन्दूर ( Travancore ) राष्ट्रान्तर्वर्तिव्याघ्रपुर ( Vaikam ) समीपस्थविन्यासपुरी ( Vetchure ) वास्तव्यैरायुर्वेदभिषग्भिः **ब्रह्मश्री ते. ( तेवलक्काट्ट मूत्तु ) नीलकण्ठशर्मभिः** प्रेषितम्। तैरेव बहुषु स्थलेषु टिपण्या सनाथीकृतं च। सेयं वैद्यमनोरमा मया भूयः संशोध्य आयुर्वेदीयग्रन्थमालायां प्रसिद्धिं नीता। ग्रन्थस्यास्य संशोधने यथामति कृतेऽपि यत्ने भ्रमप्रमादादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेद्गुणैकपक्षपातिभिः सुधीभिः संशोधनीयं क्षन्तव्यश्चाहमिति शम्।

यादवशर्मा.

---

## धाराकल्पः।

अयं ग्रन्थोऽपि मदीयपरमसुहृद्भिः **ब्रह्मश्री ते. नीलकण्ठशर्मभिरेव** केरललिपिस्थप्राचीनपुस्तकमवलम्ब्य देवाक्षरैर्लिखित्वा प्रेषितः। एतद्ग्रन्थकर्तुर्नामादिकं न ज्ञायते। अस्मिन् ग्रन्थे धारापरिषेकविधिरतीव सरलतया विशदतया चोपवर्णितोऽस्ति। यद्यप्ययं विषयश्चरकसुश्रुतवाग्भटेषु स्वेदाध्याये उक्तस्तथाऽप्यत्र तदपेक्षयाऽपि सम्यक्तया कथितोऽस्ति। अतोऽयं ग्रन्थो लघुरपि भिषजामतीवोपादेयः। वैद्यमनोरमायाः धाराकल्पस्य च आयुर्वेदीयग्रन्थमालायां मुद्रापणार्थं दानेन बहूपकृतमस्या ग्रन्थमालायाः **ब्रह्मश्री ते. नीलकण्ठशर्मभिः**।

यादवशर्मा.

वैद्यवर्यश्रीकालिदासविरचिता

# वैद्यमनोरमा।



## अथ ज्वरचिकित्साधिकारो नाम प्रथमः पटलः।

वन्दे मन्दक्वणद्भृङ्गवृन्दानन्दकरं मदैः।
हन्तारमन्तरायाणामिन्दुशेखरनन्दनम् ॥ १ ॥
इमां मनोरमां पाणौ गृहीत्वा रोगपीडितान्।
चिकित्सयन्तो लोकेऽस्मिन् कीर्तिमन्तो भवन्ति हि ॥ २ ॥

सुलभसुभगभेषजानि सिद्धा-
न्यमृतसमानफलानि यानि यानि।
सकलगदहराणि मानवाना-
मिह कथितानि भवन्ति तानि तानि ॥ ३ ॥

अत्यध्वश्रमशोकस्त्रीभयक्रोधादिजे ज्वरे।
लङ्घनं न हितं तत्र पयः पथ्यं यथाऽमृतम् ॥ ४ ॥
दोषजासु बलं रक्षन् लङ्घयेज्ज्वरितेषु क्रमात्।
पेयाकाथरसान्नाद्यैः पथ्यैः साध्यानुपक्रमेत् ॥ ५ ॥
शृतशीतं शृतोष्णं वा जलं दोषाद्यपेक्षया।
पेयं षडङ्गसिद्धं वा तप्तं वा भृष्टलोष्टकैः ॥ ६ ॥

---

१ "शुण्ठीमलयजोशीरघनपर्पटवारिभिः। षडङ्ग इति विख्यातो योगोऽयं सूरिभिः स्मृतः ॥"

समानभागधान्याकनागराभ्यां शृतं जलम् ।
पेयं प्रागपि सप्ताहाज्ज्वरितेनाग्निवृद्धये ॥ ७ ॥
पाठोशीरजलैः सिद्धः क्वाथः स्यात् पाचनं ज्वरे ।
नागराम्बुयवासैश्च पृथक् सिद्धः सपर्पटैः ॥ ८ ॥

अमृताकणमूलनागराणा-
मसृतानागरदुस्स्पृगम्बुदानाम् ।
अनिलज्वरनाशना कषायौ
कथितौ ह्यागमकोविदैर्भिषग्भिः ॥ ९ ॥

गोपाङ्गनाकमलचन्दनसेव्यमुस्ता-[1]
यष्टीजलोत्पलमधूकशतावरीभिः ।
सिद्धं सुशीतमनु माक्षिकशर्कराढ्यं
पित्तज्वरं जयति दाहतृषाढ्यमम्बु ॥ १० ॥

पङ्केन दाडिमफलस्वरसेन वाऽपि
सक्तून् पिबेत् प्रबलपित्तभवज्वरार्तः ।
तद्वत् षडङ्गशृतमम्बु पिबेत् सिताढ्यं
तृड्दाहजूर्तिशमनाय च दीपनाय ॥ ११ ॥

पथ्याकट्फलनागराम्बुदवचाभूनिम्बधान्यद्रुमै-
र्भार्गीपर्पटकान्वितैः शृतमिदं तोयं सुशीतं पुनः ।
मध्वाढ्यं परमाणुरामठयुतं श्लेष्मज्वरं नाशयेत्
कोष्ठार्तिश्वसनाग्निसादकसनारुच्यास्यशोषान्वितम् ॥१२॥

कूष्माण्डपुष्पस्वरसेन नस्यं सविश्वसारेण कृतं ज्वरघ्नम् ।
वातात्मजेनाहृतमौषधं यद्रामानुजस्येव नयेत्प्रबोधम् ॥ १३ ॥
प्रलापमूर्च्छाभ्रमदाहयुक्ते तृषान्विते दोषसमूहजूर्तौ ।
पयोऽङ्गनानां पिबतां नराणां द्रागेव जूर्तिः प्रशमं प्रयाति ॥
सुनिषण्णवेणुपत्रशुण्ठीमुस्ताशृतः क्वाथः ।
हन्याज्ज्वरमतिवेगं दोषसमूहोद्भवं त्रिदिनात् ॥ १५ ॥

---

१ 'विश्व—'इति पाठान्तरम् ।

कल्कितामारनालेन[1] स्वच्छन्दं रजनीं पिबेत् ।
नतु देशान्तरगतो बाध्यते शीतिकादिभिः ॥ १६ ॥

तुङ्गद्रुमस्य तरुणानि फलानि चर्म
चत्वारि किञ्चिदपनीय जलस्य कुम्भे ।
पक्त्वा गते तदुदके निशि पीतमेकं
संसाधयेज्ज्वरमतीव चिरन्तनं द्राक् ॥ १७ ॥

पाठाशिफापयः पीतं प्रातरेव दिनैस्त्रिभिः ।
शीतिकां कम्पसंयुक्तां नाशयेल्लशुनं तथा ॥ १८ ॥

वन्दाको बिल्वभवस्तक्रेण घृतेन वा प्रगे पीतः ।
विषमज्वरस्य विकृतिं जयेन्निःशेषमतिविषमाम् ॥ १९ ॥

जीवन्तीमूलनिर्यूहः सघृतो दाहजूर्तिजित् ।
तद्वन्न्यग्रोधपादस्य बदरीपल्लवस्य वा ॥ २० ॥

सहदेवीशिफा बद्धा श्वेतसूत्रेण कन्यया ।
निहन्ति दक्षिणे पाणौ ज्वरभूतग्रहादिकान् ॥ २१ ॥

चूर्णेन कटुरोहिण्याः पत्रैर्वा ह्यमृताभवैः ।
स्वरसैः सहदेव्या वा सिद्धं तैलं ज्वरं जयेत् ॥ २२ ॥

ज्वरेण मुच्यमानस्य म्रियमाणस्य चोभयोः ।
दृश्यन्ते यानि लिङ्गानि तानि तुल्यानि निर्दिशेत् ॥२३॥

इति श्रीवैद्यवरकालिदासविरचितायां वैद्यमनोरमायां ज्वराधिकारो नाम
प्रथमः पटलः ।

---

## अथ रक्तपित्तासृग्दरास्थिस्रावसोमरोगाधिकारो नाम द्वितीयः पटलः ।

मेघनादाभयापद्मकिञ्जल्कैः साधितं जलम् ।
सक्षौद्रं रक्तपित्तघ्नं बीजं वा वास्तुकोद्भवम् ॥ १ ॥

---

१ 'आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः' ।

इक्षुदूर्वामृताधात्रीश्वदंष्ट्रास्वस्तिकोद्भवैः ।
स्वरसैर्नालिकेराम्बुपयोयुक्तैः सुकल्कितैः ॥ २ ॥
चातुर्जातपयोवृक्षमुकुलाम्बुपयोधरैः ।
सारिवोशीरयष्ट्याह्वसितोपलहिमामयैः ॥ ३ ॥
सिद्धं घृतं नवं तूर्णं रक्तपित्तहरं परम् ।
अस्थिस्रावं च नारीणां तृड्दाहौ च महाबलौ ॥ ४ ॥
उभयायनमप्याशु रक्तपित्तं हिताशिनाम् ।
हन्ति पित्तामयान् चान्यान् पाननावनलेपनैः ॥ ५ ॥
बहुप्रकारैरुपसेव्यमाना क्षौद्रान्विता रक्तजयाय वासा ।
सत्यं समर्था जगतां सवित्री यथैव संसारजयाय गौरी ॥६॥
तत्क्षणं क्षुण्णमाघ्रातं शुष्कगोमयमस्यति ।
नासाश्रुतमसृक्स्रावं चन्दनस्योत्पलस्य वा ॥ ७ ॥
दाडिमकुसुमस्वरसः स्तन्यं वा चूतकुसुमसलिलं वा ।
दूर्वाम्भो वा नस्यान्नासारक्तस्रुतिं जयति ॥ ८ ॥
धात्र्यस्थि तण्डुलाम्भोभिः पीतं हन्यादसृग्दरम् ।
पीता शीताम्बुना पिष्टा धात्री वोदुम्बराम्बुना ॥ ९ ॥
जीर्णचेलमसितं पिबेद्वधूः पुष्पजातरुधिरेण पीडिता ।
तक्रतैलतरुणोष्णवारिभिः प्राप्तपुष्पसुभगा भविष्यति १०
उत्पलपत्रस्वरसः किञ्चित्तैलेन सहापीतः ।
अस्थिस्रावं स्त्रीणां नाशयति नरस्य सोमरोगं च ॥११॥
अनन्तया साक्षतया कृता तैलेन शष्कुली ।
अस्थिस्रावहरी तद्वत् कार्पासाक्षतजा च सा ॥ १२ ॥

---

१ 'त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तैश्चातुर्जातकमुच्यते' । २ 'तिलजीरकसंयुक्तैः पिष्टैर्या तण्डुलादिभिः । कृता तु हस्तयन्त्राभ्यां सुभृष्टा च तिलोद्भवे । पाशमण्डलसंकाशा शष्कुली सा प्रकीर्तिता' ।

पूर्वं तोये वासरं वासितानां
चिञ्चास्थीनां दुग्धकल्कीकृतानाम् ।
पीत्वा स्यातां सुन्दरीपूरुषौ द्रा-
गस्थिस्रावात्सोमरोगाच्च मुक्तौ ॥ १३ ॥

इति वैद्यवरश्रीकालिदासविरचितायां वैद्यमनोरमायां रक्तपित्तासृग्दरा-स्थिस्रावसोमरोगाधिकारो नाम द्वितीयः पटलः ।

---

## अथ कासश्वासहिक्काधिकारो नाम तृतीयः पटलः ।

इन्द्रयवपल्लवयवयुतं मरिचं खादेदिनत्रितयम् ।
कासान् जयति समूलान् नाकुल्याः पादवल्कमिव ॥ १ ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
सैन्धवं सयवक्षारं हिङ्गु सौवर्चलं तथा ॥ २ ॥
मरिचं नागरं चैव पलांशैस्तैर्विपाचयेत् ।
क्षीरे चतुर्गुणे सम्यक् सर्पिः सिद्धं पिबेन्नरः ॥ ३ ॥
शूलगुल्मोदरार्तिघ्नं हृद्रोगोरःक्षतापहम् ।
आनाहपाण्डुताप्लीहकासश्वासविकारनुत् ॥ ४ ॥
पिप्पल्याद्यमिदं सर्पिः पित्तगुल्महरं परम् ।
नैकुञ्जिके रसे पीतं सैन्धवं शूलशान्तये ॥ ५ ॥

त्रिकटुकमजमोदा चित्रको हिङ्गु भार्गी
बिडमपि सहचव्यं सैन्धवं यावशूकम् ।
अमृतमिति भिषग्भिः पूजितश्चूर्णराजः
कफपवनहन्ता शूलहा दीपनश्च ॥ ६ ॥

अमृताविडङ्गरास्नादारुवराव्योषचूर्णसमतुलितम् ।
सहसा सर्वान् कासान् सितारजः परिहरेत्समधु ॥ ७ ॥

---

१ अयमर्धश्लोको न दृश्यते केषुचिद्धस्तलिखितपुस्तकेषु ।

ब्राह्मीवासासिंहलीभिः कुण्डल्या मूलकेन च ।
अमृतालर्ककैः सर्पिः साधितं श्वासकासजित् ॥ ८ ॥
हिङ्गुवचाग्निमहौषधदीप्यकपथ्याकणात्रिवृताम् ।
क्रमवृद्ध्या जनितरजः कासं श्वासं जयेत्सघृतम् ॥ ९ ॥
चिदुलीदलहरितालव्योषशिलाः केशराजरसपिष्टाः ।
गुटिकीकृता निहन्युः कासरुजं धूमपानेन ॥ १० ॥
निर्गुण्डीकुण्डलीपथ्यामरिचैः समभागिकैः ।
क्वाथो लवणसंयुक्तः कासश्वासविकारनुत् ॥ ११ ॥
चिञ्चात्वगेका द्विनिशा त्रिसर्जैकपुनर्नवा ।
नवजातिदला वर्तिः कासजित् बाह्यधूपिता ॥ १२ ॥
शिलाकृष्णे समे स्यातां तस्यार्धं विश्वभेषजम् ।
तस्यार्धं मरिचं चैव तस्यार्धा तु हरीतकी ॥ १३ ॥
भृङ्गसारेण संपिष्य वर्तिं कुर्यात् पटोदरे ।
तया धूमं पिबेदार्तो भुक्त्वा ताम्बूलचर्वणम् ॥ १४ ॥
कृत्वा त्रिवारं मतिमान् कासश्वासान्निवर्तयेत् ।
[१]तथा क्षौद्रयुतं नूत्नं नवनीतं सितायुतम् ॥ १५ ॥
पलाशोदुम्बरफलं मरिचैः सह भक्षितम् ।
कासं हरेत्त्रिभिर्वारैः कायक्लेशकरं निशि ॥ १६ ॥
श्वासायासविनाशार्थमाशयेत् कदलीफलम् ।
शृतं मूत्रेऽथवा भृष्टमथवाऽङ्गारपाचितम् ॥ १७ ॥
कणोषणनिशापथ्यागुडगोस्तनिकारजः ।
लीढं तैलेन कासानां श्वासानां च निवृत्तये ॥ १८ ॥
निर्गुण्डीस्वरसे शृतं तिलभवं भृङ्गादिचूर्णान्विते
पात्रे निःशृतमन्वहं दिनमुखे तन्मात्रया यः पिबेत् ।

---

१ अयमर्धश्लोको न दृश्यते केषुचिद्धस्तलिखितपुस्तकेषु ।

कासश्वासमशेषममितनुतां शीघ्रं जयेन्मासतो
यक्ष्माणं च समस्तरोगनिलयं रामो यथा रावणम् ॥१९॥

कुण्डल्युत्तमकन्यकामधुकरव्याघ्र्यर्कनिर्गुण्डिका-
कासघ्नीट्टपकण्टकीदलरसे क्षीरे क्रमाद्भाविता ।
कृष्णा क्षौद्रसमन्विता दिनमुखे लीढा जयेद्दुःस्थितं
कासश्वासमरोचकं क्षयमपि प्राज्ञो यथा किल्बिषम् ॥२०॥

परिणतकैडर्याच्छकलीकृत्वाऽऽज्यकुम्भपरिदग्धात् ।
तैलं निःसृतमस्यति कासं श्वासं प्रमेहं च ॥ २१ ॥

काकोदुम्बरपल्लवं शकलितं दुग्धे गवां पाचितं
किञ्चिन्मिश्रितमागधं दिनमुखे पीत्वा पयस्तादृशम् ।
कासश्वासमशेषमाशु शमयेद्गाढमस्तुनान्वितं
क्षीरं तद्वदिदं द्वयं च भिषजां कीर्तिप्रदं कीर्तितम् ॥२२॥

मधुकररसकंसे माणिमन्थाष्टबिल्वं
मरिचतिलजशुण्ठीसर्पिषामञ्जलिर्द्वे ।
शुभतरदिनलग्ने साधु संयोज्य पक्वं
श्वसनकसनशान्त्यै भक्षयेद्भोजनेन ॥ २३ ॥

साध्ये श्वासे दोषकालाग्निसत्त्वान्
सम्यग्वीक्ष्य प्रातरेव प्रपीतम् ।
कृष्णाशुण्ठीसैन्धवक्षौद्रयुक्तं
राहूच्छिष्टोद्धृतसारं[1] प्रशस्तम् ॥ २४ ॥

शुण्ठीकणासिताधात्रीरेणुः क्षौद्रेण मिश्रितः ।
हिक्कां हन्ति समालीढः, सक्षौद्रं पिच्छभस्म[2] वा ॥ २५ ॥

पित्थपत्राणि विमर्दितानि हिक्कासु जिघ्रेदथवाऽर्कतप्तम् ।
मृत्पिण्डमत्यन्तसुशीततोयैः सिक्तं तु ह्रीबेरकवारिणाक्तम्[3] ॥

---

१ राहूच्छिष्टं लशुनं, तस्य स्वरस इत्यर्थः । २ मयूरपिच्छभस्मेत्यर्थः ।
३ 'त्रुटीवालकवारिणाऽऽक्तम्' इति पा० ।

हिक्कायामतिवृद्धायां भ्रुवोर्मध्ये निषेचयेत् ।
शीतलेनाम्बुना स्नानं धूमं वा गुग्गुलोः पिबेत् ॥ २७ ॥

इति वैद्यवरश्रीकालिदासविरचितायां वैद्यमनोरमायां कासश्वासहिक्काधिकारो नाम तृतीयः पटलः ॥ ३ ॥

---

## अथारोचकशूलच्छर्दितृष्णाधिकारो नाम चतुर्थः पटलः ।

आजं मांसरसक्षीरं गण्डीरं शोषिणां हितम् ।
अश्वगन्धादिलाक्षाद्यं तैलमभ्यञ्जने हितम् ॥ १ ॥

अश्वगन्धारजो लिह्याद्गुडेन हविषाऽथवा ।
पयसा वा पिबेच्छस्त्रक्षतक्षीणो रसायनम् ॥ २ ॥

गुडेन पिप्पलीभिर्वा मरिचेनान्विता शृता ।
काकमाची भवेद्वल्या तद्रसेन हविः शृतम् ॥ ३ ॥

पक्त्वा संस्कारसंभृष्टो बृहतीफलसंचयः ।
दध्नि प्रकथिते पश्चात् क्षिप्तः पथ्योऽप्यरोचके ॥ ४ ॥

प्रसेकशमनी पथ्या भुक्तस्योपरि चर्विता ।
प्राग्भक्तं निम्बकुसुमं पटोली झरसी च वा ॥ ५ ॥

द्रोणीत्वङ्नागकुसुमगुडशुण्ठ्यः क्रमाधिकाः[1] ।
भक्षितास्तु कृमिं शूलं प्रसेकं घ्नन्ति तत्क्षणात् ॥ ६ ॥

प्रयान्ति तद्भक्षयतां प्रभाते कुबेरनेत्राभिनवं प्रवालम् ।
नृणां शमं छर्द्यरुचिप्रसेकाः ससैन्धवं नागररामठं वा ॥७॥

किञ्चिद्भृष्ट्वा मृत्तिकां ग्रीष्मतप्तैः[2] शीते तोये मर्दयित्वा प्रसाद्य ।
शीते क्षौद्रं तुल्यमालोड्य पीत्वा तृष्णां छर्दिं चाशु तद्व्यक्करोति ॥

मुद्गविदलैर्विपक्वैः केरीक्षीरेण[3] भक्षितैर्बहुशः ।
छर्दिर्नश्यति सहसा तयोस्तुल्याम्बुभिः पीतैः ॥ ९ ॥

---

१ अयमर्धश्लोकोऽधिको दृग्गोचरीभवति केषुचिद्धस्तलिखितपुस्तकेषु ।
२ 'ग्रीष्मतप्तां' इति पाठान्तरम् । ३ नारिकेलक्षीरेणेत्यर्थः ।

एलालवङ्गवल्कलतमालदलजं रजो मधुविमिश्रम् ।
लीढं वमिं निहन्याद्बिल्ववराव्योषचूर्णं वा ॥ १० ॥
दग्ध्वा वराटिकागेहमङ्गाराभं तदम्भसि ।
निर्वापितं ततः पीतं तज्जलं नाशयेद्वमिम् ॥ ११ ॥
अतीव भृष्टं लवणं तिलोत्थे प्रक्षिप्य तेनोत्थितमाशु तैलम् ।
आदाय लिप्त्वा हृदये तदूर्ध्वं गुञ्जादलान्यर्पय हृद्गदघ्नम् ॥ १२ ॥
स्तनयोरपि मूले च रुग्भवेद्यदि वेगिनी ।
निशाशम्बूकसंयुक्तचूर्णलेपो जयेद्रुजम् ॥ १३ ॥
न्यग्रोधशुङ्गोत्पलकन्दकोलमाषैः शृतं तोयमतीव शीतम् ।
क्षौद्रान्वितं पीतमपाकरोति तृष्णां च पर्याप्तमतीव शीघ्रम् ॥
आर्द्रपूगफलचर्वणोत्सुकं स्वेन वल्कशकलेन चर्वयेत् ।
तन्मदं हरति तत्तथाकृतं स्वाभिमानमिव वेदविश्रुतिः ॥ १५ ॥
ताम्बूले सति भक्षिते भवति चेत्कासान्वितं विस्वरं
निष्ठीवेन सहैव तच्छिशिरमम्ब्वाघ्राय शीघ्रं पिबेत् ।
आहोस्विद्विवृतास्यवान् पवनमाश्वेवोद्गिरन्नासिकां
रुद्ध्वा पार्श्वगतो जनः प्रबलहृत्क्षोभं न(त)कुर्याद्द्रुतम् ॥ १६ ॥
पित्तहृत्कम्पतृण्मूर्च्छाभ्रमादीन् घ्नन्ति दारुणान् ।
नालिकेराम्बुना पीताः सक्तवः समशर्कराः ।

इति वैद्यवरश्रीकालिदासविरचितायां वैद्यमनोरमायामरोचकशूल-
छर्दितृष्णाधिकारो नाम चतुर्थः पटलः ।

---

## अथार्शोदावर्ताधिकारो नाम पञ्चमः पटलः ।

सितासितविश्वभवौ चूर्णौ पथ्यारजःसमौ ।
गुडावलीढौ गुदजान् हतः श्लेष्ममरुद्भवान् ॥ १ ॥

---

१ “ पथ्याबिभीतधात्रीणां फलैः स्यात्त्रिफला समैः । फलत्रिकं च त्रिफला सा वरा च प्रकीर्तिता ” ॥

मासमेकमनन्नाशी सूरणं भक्षयेत्सुखम् ।
तक्रानुपानमाश्वर्शोनिर्मूलोन्मूलनोत्सुकः ॥ २ ॥
स्विन्नं निष्पीडितं स्नुह्याः पत्रं पायौ निधापयेत् ।
दुर्णामकृमिकण्डूतिशोफरुक्शान्तिकृत् परम् ॥ ३ ॥
किंशुकबीजपरागैर्लशुनपुनर्भूप्रवालसंयुक्तैः ।
पोट्टलिका तिलजाक्ता स्वेदादर्शांसि नाशयति ॥ ४ ॥
कालशाकमरिचाम्लसैन्धवैर्भृष्टषष्टिकहितोष्णभोजनम् ।
तैलयुक्तमिह कीलनाशनं रुच्यमग्निजननं सरं परम् ॥ ५ ॥
हठस्य कैडर्यदलस्य चापि रजः सुसूक्ष्मं मधुनाऽवलीढम् ।
गुदाङ्कुरोन्मूलविनाशनाय पर्याप्तमित्याह भिषग्वरिष्ठः ॥ ६ ॥
पथ्यारसोनयोर्भागं निष्कं, द्वौ वज्रवल्लिजौ ।
ईषल्लवणतैलाक्तमेतदर्शांसि नाशयेत् ॥ ७ ॥
मयूरवल्ककिञ्जल्कवरीवासाशृतं जलम् ।
रक्तार्शसां प्रशान्त्यर्थं स्यात्पलाण्डुरिवाशितः ॥ ८ ॥
अभयात्रिवृत्कुलत्थैः शृतमुदकं पिप्पलीरजोयुक्तम् ।
चित्रातैलविमिश्रं पीतमुदावर्तमस्यति त्रिदिनात् ॥ ९ ॥

इति वैद्यवरश्रीकालिदासविरचितायां वैद्यमनोरमायामर्शोदावर्ताधिकारो नाम पञ्चमः पटलः ।

---

## अथातिसारग्रहणीविसूचिकाधिकारो नाम षष्ठः पटलः ।

पाठानागरदुःस्पृग्बिल्वाग्निद्विषाब्दसंशृतः क्वाथः ।
आमातिसारमस्येत् स्रावं सकफं सशूलं च ॥ १ ॥
पल्लवं चविकायाश्च श्वेतमूलाह्वसंभवम् ।
पल्लवं क्षीरिवृक्षस्य पिष्ट्वा तैलेन पाययेत् ॥ २ ॥

शीघ्रं सर्वातिसारान् वै जयेदन्यैः किमौषधैः ।
तथाऽहिफेनं सक्षौद्रं तुल्यकारस्करत्वचम् ॥ ३ ॥
ऐरावतीपत्रसुशल्लकानि क्षुण्णानि निष्पीड्य रसः प्रपीतः ।
बलासरक्तप्रबलातिसारं विनाशयेद्द्वित्रिदिनप्रयोगात् ॥ ४ ॥
चिञ्चाबीजत्वचं विश्वं सैन्धवं दीप्यकं तथा ।
पिबेदामेन तक्रेण सोऽतिसारं जयेत्क्षणात् ॥ ५ ॥
यक्षलोचनमज्जानं काञ्जिकेन पिबेत्प्रगे ।
श्लेष्मरक्तातिसारं च कोष्ठशूलं जयेद्द्रुतम् ॥ ६ ॥
रसो निहन्त्यतीसारमाम्रत्वक्पुटपाकजः ।
शुक्तस्तैलेन रक्ताढ्यं सबलासं सनिस्रवम् ॥ ७ ॥
बदरीपल्लवरसं पिबेद्रक्तातिसारवान् ।
क्वाथं कदम्बशुण्ठीभ्यां पिबेद्रात्रौ दिनत्रयम् ॥ ८ ॥
मुस्तां संक्षुद्य शुद्धां समपयसि दृढं मर्दयित्वा सुपूतां
पक्त्वा पादावशिष्टां मृदुतरशिखिना शीतलीकृत्य पश्चात् ।
लीढ्वा क्षौद्रान्वितां तां जयति सकफं रक्तयुक्तातिसारं
विष्णोः पूजेव सद्यः शमयति दुरितं पूर्वजन्मार्जितं तु ॥ ९ ॥
जम्बूक्षीरीवृक्षारलुककुभकरञ्जपल्लवस्वरसम् ।
लकुचफलस्वरसपलं छागं पयः पलमपि प्रगे पीत्वा ॥ १० ॥
जयति सरक्तश्लेष्मं प्रवाहणं गुदेषु जातं च ॥ ११ ॥
पूर्वेद्युरानीतसुरक्षितं जलं प्रभातकाले प्रपिबेत् सतैलम् ।
चिरन्तनं द्राक् शमयेत् सुघोरं प्रवाहणं रक्तकफान्वितं तु ॥१२॥
आजे पयसि पाकान्ते पथ्याचूर्णं क्षिपेत् पुनः ।
दधि जातं पिबेत् प्रातस्तत्प्रवाहणपीडितः ॥ १३ ॥

---

१ अर्धश्लोकोऽयं नोपलभ्यते केषुचिद्धस्तलिखितपुस्तकेषु । २ 'जयत्यलं' इति पाठान्तरम् ।

तथा पक्वान्नबाष्पेण स्विन्ना तेनैव भक्षिता ।
सरक्तां बिम्बिसीं हन्यात् सतैला क्षुद्रदुग्धिका ॥ १४ ॥
माणिमन्थमरिचाभयाजटा यक्षनेत्रसमभागसंमिताः ।
तक्रतैलघृतमात्रयाऽन्विता नाशयन्ति सहसा प्रवाहणम् ॥१५॥
कृष्णाशुण्ठीशमीवीरतरूणां पत्रकल्पितैः ।
विलेप्यपूपकल्कैश्च सतैलैः शोणितं जयेत् ॥ १६ ॥
केदारसीमोद्भवमूषिकस्य मांसं गतान्त्रं पयसा प्रपिष्य ।
तैलं पचेत्तद्विधिना प्रलिम्पेत् पिबेद्गुदभ्रंशविनाशनाय ॥१७॥
गोकर्णत्वङ्मुस्तानमस्करीधातकीकुटजसिद्धम् ।
ज्वरातिसारं जयति जलं चतुःपञ्चपैर्दिवसैः ॥ १८ ॥
पयःप्रस्थे सम्यङ्नवमुदकमासिच्य जलदान्
शतद्वन्द्वान् क्षुण्णानपि सपदि निक्षिप्य विपचेत् ।
पयःशिष्टे त्यक्त्वा जलदशकलानि प्रतिवपे-
दुदश्वित्तज्जातं दधि जठररोगानपनयेत् ॥ १९ ॥
तदाथोऽस्मिन् दुःस्पृक्शृतमुदकमासिच्य शनकै-
र्मथित्वा तत्स्नेहं मथितमपि पथ्यौषधयुतम् ।
सदा पाने चान्ने करचरणयोर्योजितमिद-
मतीसारं हन्यादपि बहुविधाकारमचिरात् ॥ २० ॥
तक्रद्रोणे सशुक्ते लवणदशपलैर्विश्वपथ्यासमांशै-
श्चत्वारिंशत्प्रकुञ्चं घृततिलजपलान्यष्ट संयोज्य पश्चात् ।
पक्त्वा पाकेऽष्टचूर्णात्त्रिपलमपि समायोज्य धान्ये स्थितं तत्
खादेदग्नेः प्रदीप्तिं जनयति जयति प्लीहगुल्मोदरादीन् ॥ २१ ॥
पुराणशाल्यभावे तु शालीन् सप्तार्चिषा सह ।
पचेदोषधिभिर्वाऽन्यैर्लघिमानं भजन्ति ते ॥ २२ ॥

---

१ "ऊषणत्रयसिन्धूत्थैः साजमोदद्विजीरकैः । हिङ्गुतुल्यैरेभिराहुरष्टचूर्णं मनीषिणः ॥" २ चित्रकेणेत्यर्थः ।

अविरुद्धोपदंशेन पक्कमन्नेन मात्रया ।
भक्षितं मरिचं पूर्वं भृष्टं दुर्जरतां जयेत् ॥ २३ ॥
कालशाकविजयामहौषधैः साधितं रसयुगाक्षिभागशः ।
वारि वारयति शूलतृड्ज्वरान् विम्बिशीमपि विसूचिकां क्रमात् ॥
तण्डुलोदकपिष्टेन तालमूलेन लेपनम् ।
नाभौ प्रकल्पितं सद्यो जयत्येव विसूचिकाम् ॥ २५ ॥
आमे विदग्धे विष्टब्धे विसूच्यां च वमेद्द्रुतम् ।
अशक्तश्चेत्पिबेत् कोष्णसलिलैः सर्पगन्धिकाम् ॥ २६ ॥
माणिमन्थजीरकाजमोदमागधौषधै-
र्वर्धितैः क्रमेण तैः समं हरीतकीरजः ।
पाचनं विरेचनं प्रदीपनं प्ररोचनं
पायुकीलनाशनं हुताशनाह्वयं तु तत् ॥ २७ ॥
निष्कं पौनर्नवं पत्रं तस्यार्धं स्यात् सिकासिका (?)
सिन्धूत्थं लशुनं रक्तं शुण्ठीं हरितमञ्जरीम् ॥ २८ ॥
मरिचांश्च पृथक् पादान् चूर्णमेतत्तु मस्तुना ।
पिष्ट्वा प्राग्भक्तमश्नीयादिच्छन् वह्नेर्बलं महत् ॥ २९ ॥
श्वेतपर्णासमूलेन[1] सविश्वेन शृतं जलम् ।
अजीर्णं शमयेत्तूर्णं कर्णः कार्श्यमिवार्थिनाम् ॥ ३० ॥
यक्षाक्ष्यास्तरुणाग्रकाण्डमणुशश्छित्वा जले पाचये-
त्तस्यास्तद्द्विगुणे तदम्भसि गते प्रस्थेन युक्तं पटोः ।
दुग्धप्रस्थमजस्य तेन विपचेत्तस्मिन् रसोनोषणं
तैलाज्यं च पलद्वयं प्रतिवपेत्तद्दीपनं स्यात्परम् ॥३१॥
अलर्ककुसुमाञ्जलिर्लशुनाग्निकासैन्धवात्
पलाष्टकमथोषणैलपुनर्नवाद्रे पलम् ।
यक्षदृक्पञ्चुरसनापिचुयुतं च विश्वं तथा
तैलघृतषट्पलं पयसि पाचितं मान्द्यहृत् ॥ ३२ ॥

---

१ 'श्वेतपूलासमूलेन' इति पा० ।

परमूरुपूगतैलपेषिता पृथगाद्यैरपि चूर्णितैः सह ।
परिलोड्य पिबेत्तु मात्रया दिवसादौ प्रबलाग्निमान् भवेत् ।
किमु कुष्ठभगन्दरानिलैरपि बाधा न भवेत्सुनिश्चितम् ॥ ३३ ॥
कालशाकविजयामहौषधैः साधितं जलमजीर्णनाशनम् ।
पुण्डरीकनयनाङ्घ्रिपङ्कजक्षालनोदकमिवाशु किल्बिषम् ॥ ३४ ॥
अर्धावशिष्टं जलमाढकार्धं महौषधैः केवलमेव पीतम् ।
प्रदीपयेज्जाठरपावकं द्राक् तदीप्तिकृद्भिः किमुतान्यभेषजैः ॥३५॥
पर्युषितान्नं भुक्त्वा माहिषदध्ना तु शीतलाम्बु पिबेत् ।
अत्यग्निं जयति नरो लक्ष्मीरससिद्धमन्नं वा ॥ ३६ ॥

इति वैद्यवरश्रीकालिदासविरचितायां वैद्यमनोरमायामग्निमान्द्यग्रहणी-
विसूचिकाधिकारो नाम षष्ठः पटलः ।

---

## अथ मूत्रकृच्छ्रप्रमेहसोमरोगाधिकारो नाम सप्तमः पटलः ।

चिरजलधरभाण्डोद्भूतपङ्कं गृहीत्वा
जठरवृषणनाभौ निक्षिपेन्मूत्रकृच्छ्री ।
तपनकिरणतापोद्भूतमूत्रोष्णवाते-
ऽप्यतिहिमसिकतानां राशिमत्र प्रदद्यात् ॥ १ ॥
यष्ट्याह्वैलोर्वारुबीजेक्षुकाण्डैः
शीतः क्वाथो नालिकेराम्बुजन्मा ।
पैत्तं कृच्छ्रं दाहतृष्णोष्णवातं
रक्तस्रावं मूत्रसादं हिनस्ति ॥ २ ॥
स्थलशृङ्गाटफलैर्वा कल्कः केरीफलाम्बुना पीतः ।
कृच्छ्रं मूत्रस्य जयेत्क्लेशमिवैशो नमस्कारः ॥ ३ ॥
मूत्रकृच्छ्रं जयेत् पीता क्षीरेण शिखरीशिफा ।
अजाक्षीरेण संपेष्य पीता नीलीजटा तथा ॥ ४ ॥

---

१ ऊरुपूगतैलं एरण्डतैलम् । २ लक्ष्मीः केरलेषु 'तिरुताळी' इति प्रसिद्धा ।

केतकीस्वरसे सिद्धं तत्परोहाग्रकल्कितम् ।
सर्पिः पीतं दिनस्यादौ मूत्रकृच्छ्रं जयेद्द्रुतम् ॥ ५ ॥
जलेन नालिकेरस्य पिबेत् प्रातः प्रसारणीम् ।
मूत्रकृच्छ्रविनाशाय शर्करापातनाय च ॥ ६ ॥
प्रभाते पयसा पीतं क्षुद्रपप्फणपल्लवम् ।
मूत्रकृच्छ्रं जयेद्यद्वत् पापं भारतकीर्तनम् ॥ ७ ॥
पुष्यदलस्य स्वरसः सशर्करः प्रातरेव परिपीतः ।
कृच्छ्रं मूत्रस्य जयेत्स्रावमसह्यं च सहसैव ॥ ८ ॥
क्षुद्रकरवन्द(मर्द)मूलं पयसा पीतं प्रभातकालेषु ।
निरुणद्धि मूत्रकृच्छ्रं संतमसं भानुबिम्बमिव ॥ ९ ॥
ज्वरेषु मूत्रकृच्छ्रं चेत् कुमारीस्वरसं पिबेत् ।
कनीयः पञ्चमूलं वा गुह्यमेतच्चिकित्सितम् ॥ १० ॥
क्वाथो वरुणमूलस्य तत्कल्केन समन्वितः ।
पीतो निपातयेत्सद्यः शर्करामश्मरीमपि ॥ ११ ॥
यूथीमूलकुलत्थाभ्यां शृतः क्वाथो जयत्यलम् ।
शर्करां मूत्रकृच्छ्रं च गुह्यमेतच्चिकित्सितम् ॥ १२ ॥
नाभेरधस्तु धान्याम्लसेको जयति निश्चितम् ।
मूत्रकृच्छ्रं, शरीरेषु सेकस्तेनाङ्गदाहहा ॥ १३ ॥
चम्पकशिफाकषायः पीतो निरुणद्धि मूत्रमवशगतम् ।
नीचतलपतितमम्भश्चतुरजनोत्पादितो यथा सेतुः ॥ १४ ॥
प्रातरेव रजनी सुभक्षिता मेहविंशतिविनाशिनि ध्रुवम् ।
आकुलीमुकुलपादसंयुता किं पुनर्मधुमती सुचूर्णिता ॥ १५ ॥

---

१ 'पप्फणः' केरलदेशे 'पावुट्टः' इति प्रसिद्ध ओषधिविशेषः । २ पुष्यदलस्य कुष्माण्डदलस्य । ३ शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः पञ्चमूलमिदं लघु । ४ आकुलीः केरलभाषायां 'आवीरं' इति प्रसिद्धा वनस्पतिः ।

अश्वत्थबीजं हरिणस्य शृङ्गं तक्रेण पीतं मधुना सहैव ।
प्रमेहजातं सकलं निहन्ति दशाननं दाशरथिर्यथैव ॥ १६ ॥

[1]पुष्पबोधिजलवैरिशाकिनीनग्नजिज्जनितबीजमम्बुदम् ।
भूसरीरुटपयुतं सुचूर्णितं मेहविंशतिहरं क्षुदश्विता ॥ १७ ॥

कृष्णारिमेदपूलास(?) जम्बूदुम्बरकिंशुकम् ।
विदुलधातकीलोध्रमेषशृङ्ग्यब्धिकोठकाः ॥ १८ ॥

आकुल्यश्वाङ्घ्रिपङ्क्तानि पाठा रात्रिश्च चूर्णितम् ।
मधुना मात्रया लीढं प्रमेहान्नाशयेद्द्रुतम् ॥ १९ ॥

ग्राहान् विष्णोः प्रसादेन गजेन्द्रो नाशयेद्यथा ।
तद्वत् क्षौद्रान्विता दार्वी प्रा(पी)तश्चामलकीरसः ॥ २० ॥

[3]सागराङ्कोलपूलासवेणुपत्रशृतं जलम् ।
रात्रौ पिबेत् प्रमेहाणां प्रणाशायात्मवान् नरः ॥ २१ ॥

आकुलीनलदकिङ्किस(?)बीजोद्भूतचूर्णमथ तक्रमधुभ्याम् ।
पीतमाशु मधुमेहनिहन्तृ किं पुनः कफसमुद्भवमेहान् ॥२२॥

निशाद्वयारग्वधकिंशुकैश्च कैडर्यजम्बूकतकारिमेदैः ।
वराब्धिकोठैः शृतमम्बु शीतं क्षौद्रान्वितं मेहगणं निहन्यात् २३

नन्द्यावर्तदलैः पिष्टैरीषत्तण्डुलसंयुतैः ।
तैले विपाचितोऽपूपो मेहविंशतिनाशनः ॥ २४ ॥

उदुम्बरक्षीरसुपिष्टचिञ्चाविनिर्मितो निष्कसमानपिण्डः ।
सशुक्रगुञ्जामधुतक्रपीतः प्रमेहमातङ्गविनाशसिंहः ॥ २५ ॥

यस्य यस्य प्रमेहस्य शमनं प्राशयेद्भिषक् ।
तस्य तस्य जलात्कल्कस्तं तं मेहं निरस्यति ॥ २६ ॥

कमलरजश्चिञ्चाफलवल्कमेहार्यम्भोधिबीजानाम् ।
द्विगुणयथोत्तरमानं चूर्णं मेहापहं समधु ॥ २७ ॥

---

१ पुष्पबोधिः अर्कः, जलं ह्रीवेरं, वैरि 'एकनायकं' इति केरलेषु प्रसिद्धं, शाकिनी 'चीर' इति केरलेषु, नग्नजित् निघण्टुषु मृग्या । २ अब्धिकोठकः 'समुद्रफेन' इति प्रसिद्धः । ३ सागरा 'समुद्रपच्च' इति केरलेषु प्रसिद्धा । ४ 'बीजत्वचा निर्मितनिष्कपिण्डः' इति पा० ।

अष्टाभिर्वासरैर्वारिवासितैर्व्रीहिभिः कृतान्
पृथुकान् भक्षयेत् सायं सद्यो मेहनिवृत्तये ॥ २८ ॥
अङ्कोलाम्लाश्वकर्णामलकमुनितरुक्षीरिवृक्षप्रियङ्गु-
जम्बूकालारिमेदत्वचलुलितजले साधितं तैलमेतत् ।
तद्वुञ्जाबिल्वमुञ्जातकरजनियुक्कल्कितं मेहजालं
हन्याद्गङ्गाधराङ्घ्रिस्मरणमिव महापातकं सद्य एव ॥ २९ ॥
सुपक्वकृष्णरम्भायाः फलं भक्षयतां नृणाम् ।
न भवेत्सोमरोगश्च मूत्रकृच्छ्रं च पित्तजम् ॥ ३० ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां मूत्रकृच्छ्रप्रमेह-सोमरोगाधिकारो नाम सप्तमः पटलः ।

---

## अथ विद्रधिशूलाधिकारो नामाष्टमः पटलः ।

करञ्जबीजविश्वोग्राः करञ्जक्काथपेषिताः ।
पीताः प्रभाते निःशेषं घ्नन्त्याभ्यन्तरविद्रधिम् ॥ १ ॥
करञ्जास्थीनि संपेष्य वितुषीकृत्य चूर्णयेत् ।
स्नुग्दलस्वरसेनैव मृदित्वा रविसन्निधौ ॥ २ ॥
तैलमादाय तत्तैलं बाह्यान्तरुपयोजयेत् ।
अन्तर्विद्रधिमाश्वेव नाशयेद्बाह्यजं तथा ॥ ३ ॥
आरया श्रवसि रन्ध्रमाचरेदन्यपार्श्वमवलोक्य बुद्धिमान् ।
अन्त्रवृद्धिशमनाय किंशुकत्वक्कषायमपि पाययेच्छिशुम् ॥ ४ ॥
सैन्धवेन्द्रलतापत्रं यक्षवृग्बीजपप्फणम् ।
तक्रेण सहसा पीतं वृद्धिं शूलं च नाशयेत् ॥ ५ ॥
ऊषणेन्द्रलताशुण्ठीरसोनैरण्डजं तथा ।
तुङ्गतैलविलिप्तेन रविपत्रेण बन्धनम् ॥ ६ ॥
अन्त्रवृद्धिजनितं विनाशयेच्छूलमिन्द्रयवपत्रजो रसः ।
तैलमिन्दुसहितं यथा तथा काममीशनयनाशुशुक्षणिः ॥७॥

पीतबर्बरनिर्यासः पीतो वृद्धिं विनाशयेत् ।
अग्निं पीतदारूणां कल्कं मूत्रेण पाययेत् ॥ ८ ॥

क्षुद्रकरवन्दवरुणानलसुवर्ण
दुग्धसहितं पिबति यो जयति शूलम् ।
अन्त्रजनितं लशुननागरकुबेरा-
क्षीन्द्रलतिकाशृतजलं च निशि पीतम् ॥ ९ ॥

वर्षाभूकणमूलवह्निचविकाव्योषोत्तमानां रजः
प्रत्येकं कुडवं भवेदथ पटोः स्यात्कुण्डलीपल्लवात् ।
प्रातश्छागजलान्वितं च सहितं पक्वं पुनस्तत्पयः
कंसाभ्यां च समस्तगुल्महरणं स्यादब्धिहिङ्ग्वन्वितम् ॥१०॥

सैन्धवामलकक्षोदनवनीतगुटी जयेत् ।
पित्तगुल्मविकाराणां दोषाणां संहतिं भृशम् ॥ ११ ॥

पिण्याकसैन्धवपुनर्नवचूर्णभास्व-
त्साराजमूत्रपयसां समभागभाजाम् ।
हिङ्गूषणाज्यसहिता गुटिकाऽग्नितप्ता
गुल्मोदराग्निसदनारुचिशूलहन्त्री ॥ १२ ॥

अभ्रकगन्धकतुत्थैस्त्र्यूषणकान्तयुतैः कृतचूर्णम् ।
पाचनदीपनरोचनमेतद्गुल्मविकारमपहरति सद्यः ॥ १३ ॥

षष्टिकं छागमूत्रेण द्विगुणेन पचेत्ततः ।
गृहीतान् तण्डुलाञ्जग्ध्वा गुल्मी छागपयः पिबेत् ॥ १४ ॥

वैश्वानरं तिलजगोघृतदुग्धभक्ता-
न्यस्मिन् पचेन्मृगदृशां करलालिताङ्गम् ।
तद्देशसंभवमतीव च नीलधूपं
गोसर्पिषा सह पिबेत्कफवातगुल्मी ॥ १५ ॥

यक्षदृग्विश्वलशुनैर्वेदद्व्यृतुभागिकैः ।
क्वाथो गुल्मोदरानाहशूलोदावर्तवृद्धिहा ॥ १६ ॥

---

१ 'गन्धकटङ्कणतुत्थैः' इति पा० ।

गुल्मशमनाय न स्याद्भेषजमत्र रससलिलादृते सहसा ।
वृक्षाम्लस्य स्वरसः सैन्धवयुक्तस्तथैव नियतं स्यात् ॥ १७ ॥
सैन्धवपादेन युतं नागरचूर्णमोदनं घृतं चापि ।
भुञ्जानः पञ्चदिनं प्रहरति गुल्मं क्षणेनैव ॥ १८ ॥
कालशाकलवणौषधान्वितं भक्तपक्वमथ सर्पिषाऽन्वितम् ।
मूलमस्यति पुनर्नवोद्भवं गुल्मतोदमचिरेण निश्चितम् ॥ १९ ॥
सैन्धवं स्नुहिमध्यस्थं दग्धमङ्गारवह्निना ।
सलिलेन कवोष्णेन पिबेच्छूलनिपीडितः ॥ २० ॥
नागरशोभाञ्जनयोः क्वाथः शूलं विनाशयेत्त्रिदिनात् ।
मुनितरुवल्कक्वाथस्तद्वत् पटुरामठमतीवापः ॥ २१ ॥
केवलानिलसमुत्थे शूले महति प्रलेपयेन्मतिमान् ।
तुङ्गद्रुमतरुणजलै रसोनकल्कं वयो बलं वीक्ष्य ॥ २२ ॥
शूलं तदाशु शमयेद्विण्मूत्रे च्यावयेन्नियतम् ।
स्तन्यनिघृष्टं मरिचं नसि निहितं नाशयेच्छूलम् ॥ २३ ॥
गुडमरिचविहितकल्कः कोष्णजलैः पीत आशु नाशयति ।

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां
विद्रधिगुल्मशूलाधिकारो नामाष्टमः पटलः ।

---

## अथोदरपाण्डुचिकित्साधिकारो नाम नवमः पटलः ।

दुग्धे स्नुक्क्षीरपक्वे दधिजनितमहोरात्रतस्तन्मथित्वा
सारं हृत्वा पिबेत्तन्मथितमुदररोगी विरेकाय मर्त्यः ।
तत्सर्पिर्दुग्धमूत्रच्छगणरसदधिस्वर्णदुग्धैश्च युक्तं
पक्त्वा पाके सुजाते गलितमुदरशान्त्यै पिबेदल्पमल्पम् ॥
पीत्वा धारोष्णं प्रातरेवाग्निमध्ये
क्षीरं तोयाढ्यं साधु पक्त्वा सुखोष्णम् ।

सायं पथ्यायाः क्वाथपः पक्षमित्थं
कृत्वा रिक्तश्चोदरी स्याच्छतायुः ॥ २ ॥
भेकराजरसैः सुभावितलोहयुक्तवरारज-
स्तुल्यभागवटच्छदोद्भवभस्म चाप्यभया पुनः ।
षट्पदोत्थरसेन पेषितमक्षमात्रविनिर्मितं
पिण्डमस्यति पाण्डुरोगमुदश्विता सह सेवितम् ॥ ३ ॥
नवायसमपीवापं लिहन्मूत्रशृतं गुडम् ।
पाण्डुरोगातुरो मर्त्यः सुखी स्यान्मधुमिश्रितम् ॥ ४ ॥
अयोमलरजःपथ्ये गृष्ट्यग्रेण सुपेषिते ।
तैलयुक्ते पिबेत् प्रातः पाण्डुरोगी सुखी भवेत् ॥ ५ ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमाया-
मुदरपाण्डुरोगाधिकारो नाम नवमः पटलः ।

---

## अथ कामलाधिकारो नाम दशमः पटलः ।

शङ्खं विघृष्य सहसा प्रातः पीतं च सप्ताहात् ।
अपहरति कामलार्तिं बाणो रामस्य ताटकां भीमाम् ॥ १ ॥
मधुना निशया धात्र्या क्षीरेण वा मिश्रितः प्रगे पीतः ।
स्यान्मण्डूकीस्वरसः कामलिनां हितकरो नृणाम् ॥ २ ॥
व्योषं धात्रीं रजनीं लोहं च सिताज्यमधुसमेतं हि ।
उपयुज्य कामलार्तः सुखी भवेद्वासरारम्भे ॥ ३ ॥
अञ्झटासहितस्तक्रकल्को जयति कामलाम् ।
रसो वा भृङ्गराजस्य निषिक्तो भूरि मूर्धनि ॥ ४ ॥
तरुणीं कामलार्तस्तु भुञ्जीत त्रिदिनं प्रगे ।
कामलायाः प्रशान्त्यर्थं वैकुण्ठं पाययेन्नरः ॥ ५ ॥
किमौषधगणैः कृतैः सकलमन्त्रवादैश्च किं
चिरेण बत जीवितुं यदि महाभिलाषोऽस्ति वः ।

सुवर्णवलयेन वा रजतकेन ताम्रेण वा
दहेत मणिबन्धने सपदि कामलारोगिणः ॥ ६ ॥
सुवहापत्रस्वरसः किञ्चित्तैलेन सह पीतः ।
कामलामाशु हन्याद्रावणमिव पुण्डरीकाक्षः ॥ ७ ॥
श्रेष्ठा[1]गुडूचीपिचुमन्ददार्वीत्वगज्झटाभिर्विधिना कृतं यत् ।
पथ्याकषाये घृतमाशु हन्यात्तत्कामलां कालनिशासमानाम् ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां
कामलाधिकारो नाम दशमः पटलः ।

---

## अथ शोफविसर्पश्वित्रकुष्ठाधिकारो नामैकादशः पटलः ।

पथ्यापुनर्नवनिशाकणमूलवह्नि-
विश्वाम्बुजीरकसुरद्रुममागधीनाम् ।
क्वाथं पिबेच्छ्वयथुदण्डधरात्तजीवोऽ-
प्युत्तिष्ठते शिवसमाश्रितबालतुल्यः ॥ १ ॥
समूलतूलसंशुष्कं कार्पासं भस्मसात्कृतम् ।
तद्भस्मद्विगुणं शालितण्डुलं पयसौदनम् ॥ २ ॥
घृतेन सह भुञ्जीत सर्वश्वयथुनाशनम् ।
परिणततुम्बीलतया विहिते क्वाथे शृता विलेपी या ॥ ३ ॥
रात्रौ तया च सिद्धः क्वाथश्च श्वयथुशत्रुघ्नौ ।
पुनर्नवाभयाशुण्ठीकालशाकैः समैः शृतम् ।
जलं शोफं जयेत् पीतं प्रातः सायं च मात्रया ॥ ४ ॥
दशाङ्घ्रिकूष्माण्डलतार्द्रकाणां
चूर्णं मधौ शोफजयाय लिह्यात् ।

---

१ 'श्रेष्ठा' त्रिफला । २ 'चित्राब्द' इति पाठान्तरम् ।

आदित्यरुद्रवसुभिश्च समानभागं
चूर्णात् पलालरजसो गृहधूमतश्च ॥ ५ ॥
दग्धस्य शङ्खरजसश्च विमिश्र्य चूर्णं
क्षीरेण शोफशमनाय पिबेदतन्द्रः ॥ ६ ॥
हरीतकीत्रिवृन्मूलकुलत्थैः साधु साधितः ।
क्वाथस्तु रुबुतैलाढ्यः शोफदाहोदरापहः ॥ ७ ॥
अलर्केक्षुरकार्पासमुर्वरी(?)क्षारजं जलम् ।
आपादमस्तकप्राप्तमप्याशु श्वयथुं जयेत् ॥ ८ ॥
इक्षुरक्षारतोयेन पक्वं भक्तं विनाशयेत्
शोफं सर्वाङ्गसंभूतं गोमूत्रेण घृतान्वितम् ॥ ९ ॥
हरीतकीनागररात्रिसिद्धं जलं ज्वरोत्थश्वयथुं निहन्यात् ।
पीतं प्रभाते गुडगोक्षुराङ्घ्रिव्याघ्रीबलाविश्वशृतं पयश्च ॥ १० ॥
नीलीदूर्वावायसीकाकमाचीनिष्पावाख्यास्वस्तिकानां रसेषु ।
दूर्वासर्पिर्येन कल्केन तेन सिद्धं तैलं सर्ववीसर्पजित्स्यात् ॥११॥
प्रातः पयसा पीता लिप्ता च विसर्पकं जयेन्नीली ।
तत्क्षीरं च तथाऽस्याच्छुम्भनिशुम्भौ यथा दुर्गा ॥ १२ ॥
रसे कर्पूरवल्ल्यास्तु वासाचिञ्चाभवेऽपि च ।
अश्वगन्धासुगन्धाह्वावायसीसर्पगन्धिका- ॥ १३ ॥
नीलीभूमिकदम्बानां मूले सिद्धं तिलोद्भवम् ।
कक्षाविद्रधिवीसर्पहरं स्याल्लेपनेन तत् ॥ १४ ॥
शतधौतघृतं लिम्पेत् क्षीरीवृक्षत्वगम्बुना ।
विसर्पकविनाशाय दाहतृट्शमनाय च ॥ १५ ॥
तत्क्षणपतितैः करकैः सिक्ता संरक्षिता मृत्स्ना ।
धान्याम्लेन विलिप्ता नाशयति विसर्पकान् कृच्छ्रान् ॥१६॥
विसर्पकग्रन्थिविषादिरोगान् लेपादिना तैलघृतापहारात् ।
विनाशयेद्दुग्धयुताऽऽशु शुभ्रा दूर्वा मसूरीमपि पित्तजाताम् ॥

क्षीरिद्रुमाङ्कुरहिमोत्पलसेव्यकुष्ठ-
गोपाङ्गनामधुकनाभिजलैः सुसिद्धम् ।
यद्वायसीस्वरसकल्कितदूर्वया च
तैलाज्ययोर्यमकमाशु विसर्पकघ्नम् ॥ १८ ॥

जम्बीरनीरपरिपीतगुडो नराणा-
मारम्भकालसमयेषु मसूरिकार्तिम् ।
सद्यः शमं नयति गोपयसा प्रभाते
रुद्राक्षमप्यलमतीव रहस्यमेतत् ॥ १९ ॥

शिग्रुपत्ररसैः सर्जरसं पिष्ट्वा मसूरिकाम् ।
लिम्पेदुत्पन्नमात्रां तु सा तदैव विनश्यति ॥ २० ॥

अश्वगन्धारसः स्वल्पपारदेन विमिश्रितः ।
लिप्तो मसूरिकार्तानां भवेद्रक्षाकरो नृणाम् ॥ २१ ॥

विश्वचूर्णसहितोष्णभस्मना गात्रमाशु परिपालयेन्मुहुः ।
शीतपित्तशमनाय चन्दनं छिन्नरोहरसपेषितं तथा ॥ २२ ॥

तैलं दारुरुजासर्जयष्टीपाठावचूर्णितम् ।
शीतपित्तेऽमृताराजीकल्कस्याभ्यङ्गलेपने ॥ २३ ॥

उशीरं बहुशो लिम्पेन्नश्येत्स्वेदमसूरिका ।
चन्दनं च तथा स्नानं शमयेन्मन्दमारुतः ॥ २४ ॥

गुडेन राजद्रुमशोधितेन लिहन् सुसूक्ष्माणि रजांसि कुष्ठी ।
राजद्रुमत्वङ्मुसलीन्दुलेखापथ्यानिशानामपरेन्दुतुल्यः ॥ २५ ॥

नीलीमरीच्योः स्वरसस्य कंसे पलाष्टभल्लातककल्कसिद्धम्[1] ।
प्रस्थं जयेत्तैलमुदग्रकुष्ठं विपादिकामप्यतितोदभेदाम् ॥ २६ ॥

नीलीमूलत्वगसितसुमनोत्सर्ज्जिणी(?)मूलवल्कं
भानुक्षीरोषणलशुननिशासिन्धुदार्वीर्विचूर्ण्य ।
एतैः सर्वैर्द्विगुणिततिलजैः क्षिप्रमार्द्रप्रयोगं
लेपात् कुष्ठं प्रबलमपि वा सप्तरात्रान्निहन्यात् ॥ २७ ॥

---

१ 'पञ्चाष्ट' इति पा० ।

तिलभल्लातकपथ्याचूर्णगुडमिश्रितं जयेत् कुष्ठम् ।
चूर्णं शशिलेखायाः सकृष्णतिलाब्दमुपयुक्तम् ॥ २८ ॥

स्नुहिजातिपूतिकैश्च शम्याकदिनेशपल्लवैर्जयति ।
उद्वर्तनमष्टादशकुष्ठान् गोमूत्रसंपिष्टैः ॥ २९ ॥
जलशैवालमादाय कण्डूक्लेदान्विते तनौ ।
परिपेष्य जलं सिञ्चेत्तत्तस्य परमौषधम् ॥ ३० ॥
नीलीमूलत्वक्तिलकमरिचैस्त्रिचैकभागिकैर्लेपात् ।
गोमूत्रेण सुपिष्टैः कण्डूयुक्तं जयेत् कुष्ठम् ॥ ३१ ॥
सर्पत्वचां समरिचां तिलतैलभृष्टां
यो लेपयेन्मुनिदिनं जलमस्पृशन् सः ।
कण्डूतिकुष्ठकिटिभान् चिररूढमूलान्
जित्वा सुखी भवति कामसमानकान्तिः ॥ ३२ ॥

कृष्णारिमेदपूलासपथ्यारग्वधमेहह- ।
रैरावतवराव्योषैस्सिद्धं कुष्ठकुलं जयेत् ॥ ३३ ॥
वातस्य मूलीस्वरसे विपक्वं धूमालकम्पिल्लरुजानिशाभिः ।
सुगन्धकाश्वघ्नशिलाकरञ्जैर्मधूकतैलं विनिहन्ति कुष्ठम् ॥ ३४ ॥
हठं समूलं संचूर्ण्य प्रभाते मधुना लिहेत् ।
अष्टादशविधं कुष्ठं षण्मासाज्जयति ध्रुवम् ॥ ३५ ॥
प्रातरासुतमग्निसमीपे स्थापितं च वसुभागशृतं यत् ।
नाडिकाष्टसमये निशि पीतं क्वाथमुत्तममशेषगदघ्नम् ॥ ३६ ॥
चूर्णं कर्पूरवल्ल्या वा निम्बतैलेन सेवयेत् ।
विशीर्णनखमांसोऽपि पुनरेव युवा भवेत् ॥ ३७ ॥
बाणदलस्य स्वरसं लिकुचस्वरसं च तैलं च ।
संमिश्रितं प्रलिम्पेद्धन्यात् कुष्ठानि दुष्टानि ॥ ३८ ॥

---

१ वातमूली 'वातंकोल्ली' इति केरलेषु प्रसिद्धा ।

दशनफलमवन्तिसोमके किञ्चिदुत्कथितशोधिते शृतम् ।
तीक्ष्णकल्कसहितं विनाशयेत्तैलमर्भककपालजान् गदान् ॥ ३९ ॥

भास्करकाण्डक्षारं स्वरसेनेक्ष्वाकुजेन संलिप्तम् ।
हन्यात् कपालकुष्ठं क्रौञ्चं गिरिं तारकारिरिव ॥ ४० ॥

मूलत्वक्पत्रपुष्पाणां कार्पासस्य रसे शृतम् ।
तैलं कपालजान् कुष्ठान् जयेत्तक्राम्लसाधितम् ॥ ४१ ॥

अर्कपत्ररसगाढमिश्रितान्नालिकेरपयसोऽर्कविमिश्रात् ।
तैलमुत्थितमपोहति व्रणान् राक्षसानिव मुरारिमार्गणः ॥ ४२ ॥

वायसजङ्घामूलं बाकुचिना नक्तजिद्दलं नक्तम् ।
धान्याम्लेन सुपिष्टं त्रिदिनादुद्वर्तनेन कुष्ठघ्नम् ॥ ४३ ॥

गौरीमेरण्डपत्रस्थां धान्यस्विन्नां प्रपीडयेत् ।
तद्रसस्तैलसंयुक्तो लेपात् कापालकुष्ठहा ॥ ४४ ॥

रक्तकरवीरमुकुलान्यादाय शतं शतेन मरिचेन ।
पिष्ट्वा शृतं तिलोत्थं कुडवं पामां हरेल्लेपात् ॥ ४५ ॥

बहुशोऽर्कदुग्धभावितगोजिह्वारजोन्मिश्रितं तैलम् ।
भास्करतप्तं हन्यात् पाप्मानं पापसंभूतम् ॥ ४६ ॥

निम्बच्छदस्वरससाधितमर्कदुग्ध-
रक्ताश्वमारमुकुलोषणकल्कसिद्धम् ।
तैलं निहन्ति सहसैव समस्तपामां
छागप्रियस्वरससाधितमेवमेव ॥ ४७ ॥

भगवन् ! भास्करक्षीर ! पामाऽहमभिवादये ।
यत्र देशे भवान् प्राप्तस्तद्देशं न व्रजाम्यहम् ॥ ४८ ॥

अभिनवगोघृतेन मरिचस्य रजः पिबतां
हुतवहदेशकालबलदोषसात्म्यमवताम् ।
जघनकराङ्गुलिविवरकूर्परजानुभवाः
कररुहबान्धवाः सपदि यान्ति रुजः शमनम् ॥ ४९ ॥

तुङ्गद्रुमस्य परिपक्कफलं वितीर्यं
कृत्वाऽनलार्कपयसोर्द्विपिचुं पिचुं च ।
प्रक्षिप्य पूर्वमपरेण सुपेष्य तैल-
भागो गृहीत इह हन्ति समस्तपामाः ॥ ५० ॥

महिषविषाणमषी सहतीक्ष्णा किटिभमपोहति तैलसुपिष्टा ।
करजमलोत्थमषी च तथाऽस्यान्महिषमहासुरमाश्विव दुर्गा ५१

क्षारो महावृक्षज आशु हन्यादेरण्डतैलेन सहानुलिप्तः ।
कण्डूतिमन्तं किटिभं पुराणं सर्पं कठोरो गरुडो यथैव ॥ ५२ ॥

निशामरिचसिन्धूत्थैः सार्धं नृजलपेषिता ।
लेपात् किटिभसंहन्त्री कुलत्थशरपुङ्खिका ॥ ५३ ॥

जम्बीरस्वरसे पिष्टकासमर्दाङ्घ्रिलेपनम् ।
विचर्चिकानां सर्वाषां परमौषधमुच्यते ॥ ५४ ॥

त्रिफलां[1] किञ्चिद्भृष्ट्वा तैलेनालेपयेद्बहुशः ।
पादे विपादिकायां पादं पद्मोपमं कुरुते ॥ ५५ ॥

कारस्करास्थिनिर्यूहे तत्कल्केन हविः शृतम् ।
गव्यं वा माहिषं प्रत्नं[2] लिप्तं हन्ति विपादिकाम् ॥ ५६ ॥

स्नुक्क्षीरपलसंसिद्धतैलसैन्धवलेपनात् ।
रोहेत् सहस्रधा भिन्नमपि पादतलं क्षणात् ॥ ५७ ॥

सिध्मा शाम्यति सहसा चूर्णालनिशाप्रलेपेन ।
गोमूत्रसंयुतेन द्वित्रिदिनैर्मर्दनान्नियतम् ॥ ५८ ॥

निषिञ्चेत्सावधानः सन् मूत्रस्याद्यन्तयोः स्रवे ।
तस्य सिध्मा प्रयात्यस्तं विचित्रमिदमौषधम् ॥ ५९ ॥

प्रलेपात्सिध्म यात्यस्तमपामार्गस्य भस्मना ।
केवलेन यथा पापं चन्द्रशेखरभस्मना ॥ ६० ॥

---

१ 'हरीतक्यास्त्रयो भागाश्शिवा द्वादशभागिका । षट् भागाः स्युर्बिभीतस्य त्रिफलेयं प्रकीर्तिता ॥' २ प्रत्नं पुराणम् ।

सिध्मा शीघ्रं नाशमायाति तोये
लिप्ते स्नानं यत्र कुर्वन्ति काकाः ।
शस्त्रं हस्ते गृहीत्वा ये चरन्ति
स्पृष्टस्तेषां पाणिना सोऽपि सिध्मा ॥ ६१ ॥
दद्रौ गुडं प्रलिम्पेत्तत्स्थाः कृमयो विनश्यन्ति ।
चिञ्चापत्ररसं वा कण्डूतिनाशमन्विच्छन् ॥ ६२ ॥
कलित्वक्साधिते तोये वासिता निशि बाकुची ।
पिष्ट्वा तैलेन पीता च श्वित्रशत्रुविनाशिनी ॥ ६३ ॥
तुषाम्भसा तालशिफां सशुण्ठीं
नाभौ कवोष्णां प्रदिहेत् कृमिघ्नाम् ।
प्रातः पिबेद्वा सुरसस्य मूलं
सनागरं कोष्णजलेन वापि ॥ ६४ ॥
जठरोपरि परिलिप्तं शरपुङ्खं पातयेद्धि कृमीन् ॥ $\frac{1}{2}$ ॥
सकुलत्थैः शकलितैः जठराशुष्कपल्लवैः (?) ।
नालिकेरस्य निर्यूहः कृमिहा स्यात्सरामठः ॥ ६५ ॥
रोमशानां भृशं देहे क्षुरकर्म न कुर्वताम् ।
अन्वर्थसूचकाः सूक्ष्मा जायन्तेऽष्टपदा नृणाम् ॥ ६६ ॥
चित्रापत्ररसैर्वा रसैर्वा लिकुचपत्रसंभूतैः ।
उद्वर्तिते शरीरे नाष्टपदाः संभवन्ति पापिष्ठाः ॥ ६७ ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां शोफविसर्पश्वित्रकुष्ठाधिकारो नामैकादशः पटलः ।

---

## अथ वातशोणितवातव्याधिस्थूलकृशाधिकारो नाम द्वादशः पटलः ।

चंद्ररससंमितानां सैन्धवपिण्याकतैलानाम् ।
अम्लारनालकुडवे पक्वानां लेपनाज्जयेद्वातम् ॥ १ ॥

तैलं लिश्वा वातरोगोपशान्त्यै यामादूर्ध्वं शर्वरीसूक्ष्मचूर्णम् ।
लिश्वोद्वर्त्योद्वर्त्य तैलं हरेद्द्राग्यामादूर्ध्वं तत् पुनर्हन्ति वातम् ॥२॥

वातः सर्वाङ्गसंभूतस्तैलाभ्यक्तस्य देहिनः ।
स्वेदेन शममायाति दहनो वारिभिर्यथा ॥ ३ ॥

धत्तूरस्वरसे शृतं तिलभवं द्विप्रस्थमात्माङ्घ्रिणा
कंसे निष्कचतुष्टयद्विगुणितेनाक्षक्षपेणान्वितम् ।
अभ्यङ्गादनिलामयानपहरत्यैरण्डशुण्ठीबला-
कोरण्टैः शृतमम्बु चासुरगणान् रामो यथा सानुजः॥४॥

स्नुहीस्वरसपिष्टेन तैलेनाप्लावितेन च ।
छागगूढेन कोष्णेन लिम्पेद्वातरुजातुरम् ॥ ५ ॥

प्रभञ्जनार्तिनाशाय मातुलुङ्गफलत्वचाम् ।
लेपः कोष्णजले पिष्टा स्याल्लवङ्गत्वचां तथा ॥ ६ ॥

क्वाथेन कल्केन भूनागयुक्तं कोरण्डमूलस्य तैलं विपक्वम् ।
दुग्धेन चाशीतिवातामयघ्नं पानाङ्गलेपादिभिः शीघ्रमेतत् ॥ ७ ॥

एरण्डतैलं निर्गुण्डीस्वरसं च पृथक् समम् ।
पीत्वा कटीप्रदेशस्थं वातं जित्वा सुखी भवेत् ॥ ८ ॥

लवणारनालमिश्रैर्भृष्टैर्दृढवस्त्रखण्डपुटदिग्धैः ।
तण्डुलशकलैः स्वेदो वातार्तिं नाशयेत् सहसा ॥ ९ ॥

सुपक्वव्रीहिबाष्पाणां कटेनान्तरितात्मनाम् ।
शयनं चोपरिष्टात्तु पृष्ठवातार्तिनुत् परम् ॥ १० ॥

क्रोष्टुशीर्षेण शूनाङ्गस्ताडयेत् क्रोष्टुशीर्षकम् ।
तेनैव शान्तिमायाति दुष्टः क्रोष्टुकशीर्षकः ॥ ११ ॥

धत्तूरपत्रस्वरसे सुतीक्ष्णं परिलोडितम् ।
भानुतप्तं मुहुर्लिम्पेज्जेतुं क्रोष्टुकशीर्षकम् ॥ १२ ॥

सनालान्युरुपूगस्य पत्राण्यन्योन्यबन्धनम् ।
कृत्वा छित्त्वा द्विधा ताभ्यां स्वेदस्तैलेन वातहा ॥ १३ ॥

कार्पासबीजाक्षतमाषसिन्धुकुलत्थकोरण्डनिशार्कमूलैः ।
धान्याम्लपिष्टैरसकृत् प्रलिम्पेन्नात्युष्णशीतैरवबाहुकघ्नम् ॥ १४ ॥
परिणतकेरीक्षीरे जम्बीरफलोदकेन समतुलिते ।
क्षणदासुरधूपयुतं तैलं ह्यवबाहुकं जयति ॥ १५ ॥
लिकुचरसक्षुक्षीरे क्षीरे तैलं समेतभूनागम् ।
सिद्धं हिनस्ति लेपाद्दुस्तरमवबाहुकं क्षणतः ॥ १६ ॥
सीमन्तिनीनां पयसा प्रलिम्पेच्छुण्ठीं शताह्वां लिकुचोदकेन ।
ते जानुबाहुप्रभवानिलघ्ने स्यातां क्रमव्युत्क्रमलेपिते वै ॥ १७ ॥
सुप्तिर्भवति चेदङ्घ्रौ पुंसामासनसेवया ।
तदन्यपार्श्वकर्णस्य मर्दनैरुपशाम्यति ॥ १८ ॥
दीर्घमार्गगमनेन पादयोस्तोदमस्यति च तैलमर्दनम् ।
कोष्णतोयपरिषेचनं निशि प्रोन्नताङ्घ्रिशयनं च शस्यते ॥ १९ ॥
आत्मक्षवथौ सहसा प्रणवं संकीर्तयेद्बहुशः ।
क्षवथौ 'आयुष्मान् भव' जृम्भायां स्फोटयेत्तथाऽङ्गुल्यौ ॥ २० ॥
केदारसीम्नि संभूतं गोमयं तु प्रलेपयेत् ।
सशब्दयानः पादस्य चापलयेन स गच्छति ॥ २१ ॥
स्तब्धगात्रमनिलान्महाबलाद्भृष्टधान्यतिलवातहास्थिभिः ।
लिप्तमाशु वशमानयेच्छनैस्तिन्तिणीत्वगनलेन तापितैः ॥ २२ ॥
लशुनबर्बरगुग्गुलुनागरैर्विबुधदारुयुतैः शृतमम्बु यत् ।
ज्वलयति ज्वलनं कफकोपहृत् पवनमाशु जयत्यतिगर्वितम् ॥ २३ ॥
क्षुण्णे प्रसारणीपत्रे निर्गुण्ड्याः सिकतां भृशम् ।
भृष्ट्वा निधाय बद्ध्वा च स्वेदनादनिलान् जयेत् ॥ २४ ॥
जानुप्रदेशजनितानिलनाशनाय
तैलं निशामिशिसुरद्रुमदेवधूपैः ।
सिद्धं जले लिकुचजन्मनि शस्तमेत-
च्छोफोग्रतोदसहिते रुधिरस्रुतौ च ॥ २५ ॥

जानुशोफानिलार्तिघ्नं धत्तूरोदरपाचितम् ।
पुनर्धान्याम्लसंपिष्टं लवणं चर्चितं मुहुः ॥ २६ ॥
कारस्करस्याङ्घ्रिचतुष्पलेन क्षीराढके कल्कितलोडितेन ।
प्रस्थं पचेत्तैलमपाकरोति तद्वातरक्तं न तु तुल्यमस्य ॥२७॥
धान्याम्लमिश्रचिञ्चाम्लं पटु तैलमिदं शृतम् ।
लिम्पेद्वातास्रनाशाय मृगनाभिमथापि वा ॥ २८ ॥
करञ्जवन्दाककुलीरमन्दिरैः प्रशस्तमुद्धेखनमल्लकाञ्जिकैः ।
कदुष्णमाश्वेव विनाशयेद्ध्रुवं प्रभञ्जनास्रं पवनो यथाऽम्बुदम् २९
अतिस्थूलशरीरो यस्तिलतैलं प्रगे पिबेत् ।
पिबेदसनसारस्य क्वाथं वा मधुसंयुतम् ॥ ३० ॥
मासद्वयं प्रकुर्याद्दशमरिचोपेतमेकताम्बूलम् ।
जग्ध्वा सुशीतमम्भः पिबेत् कृशः स्यादतिस्थूलः ॥ ३१ ॥
भुक्त्वा तदार्द्रेण करेण देहं परामृशन् पञ्चदिनैः कृशोऽपि ।
पुष्टिं लभेत्स्त्रीजनमोहनाङ्गः सिध्मं च गात्रस्थितमाशु हन्ति ३२

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां वातशोणितवात-
व्याधिस्थूलकृशाधिकारो नाम द्वादशः पटलः ।

---

## अथ गर्भिणीचिकित्साधिकारो नाम त्रयोदशः पटलः ।

दशमूलानि च नलिनं कुष्ठमुशीरं नतस्पृक्के ।
एरण्डशिफां च पिबेद्गर्भाशयशोधनाय गोपयसा ॥ १ ॥
कटुकालाबुसंसिद्धं तैलमभ्यञ्जनाद्भवेत् ।
योनिदोषहरं नार्या गर्भमुत्पादयेदपि ॥ २ ॥

---

१ 'बिल्वोऽग्निमन्थः श्योनाकः काश्मरी पाटला स्थिरा । त्रिकण्टकः पृश्निपर्णी बृहती कण्टकारिका ॥ दशमूलमिदं श्वाससन्निपातज्वरापहम् ।'

पुत्रार्थं दम्पती रात्रौ शयीयातां मुदान्वितौ ।
पुष्पचन्दनताम्बूलयौवनैः समलङ्कृतौ ॥ ३ ॥
कणामूलकणादारुद्राक्षापुरगुडैः कृतात् ।
योनेरुद्वर्तनात्तूर्णं सौभाग्यं जायते स्त्रियाः ॥ ४ ॥
ब्राह्मीवासामृतानिम्बशाङ्गेष्टादलजं रसम् ।
प्रातर्निपीय तैलेन वन्ध्याऽपि लभते सुतम् ॥ ५ ॥
बीजानि बीजपूरस्य क्षीरपक्वानि या पिबेत् ।
नारी, घृतेन सह सा क्षीरभुक् गर्भधृग्भवेत् ॥ ६ ॥
अथवाऽश्वत्थवन्दाकं गर्भदं क्षीरपाचितम् ।
गृहीतमश्वगन्धाया मूलं पुष्ये पिबेदृतौ ॥ ७ ॥
क्षीरेण क्षीरभुग्भूत्वा पुत्रसंपदि मज्जति ।
शैवेन तपसा सिन्धौ ब्रह्मरूपे यथा तथा ॥ ८ ॥
कार्पासशलाटूनां कल्कं क्षीरे पिबेत्तु सप्ताहम् ।
वन्ध्या पुत्रोत्पत्तिं वाञ्छन्ती पुष्यदिवसेषु ॥ ९ ॥
वज्रवल्लीरसे तुल्यं तैलं तत्कल्कमिश्रितम् ।
ध्वजारोहणकल्याणदिवसे पार्वतीपतेः ॥ १० ॥
ऋतुस्नाता वधूः पिण्डं भक्षयेत् पुत्रकाङ्क्षिणी ॥ $\frac{१}{२}$ ॥
वन्दाकमौदुम्बरमादरेण वन्ध्याऽङ्गना पुष्पविशुद्धिवारे ।
पूर्वं विरिक्ता लभते कुमारं छागस्य दुग्धेन सह प्रपीय ॥ ११ ॥
काकमाचीशिफां पुष्ये कायं निष्पीड्य कन्यया ।
रसं स्नात्वा पिबेन्नारी लभेद्गर्भमनुत्तमम् ॥ १२ ॥
स्नात्वा चतुर्थदिवसे स्वभर्तृसंपर्कमाप्य निशि वनिता ।
पुत्रं लभेत सुभगं वामेतरपार्श्वसंयुक्ता ॥ १३ ॥
बीजपूरस्य बीजानि मूलं वा गर्भसंभवे ।
पिबेदाज्येन मूलं वा लक्ष्मणाहयगन्धयोः ॥ १४ ॥

---

१ 'मातुलुङ्गस्य' इति पाठान्तरम् ।

गिरिकर्ण्याः शिफा श्वेता कुसुदायाः कटीतटे ।
धार्यमाणा स्त्रिया गर्भस्थापनाय भवेत् प्रभुः ॥ १५ ॥
उदुम्बरशिफाक्काथे क्षीरं समधुशर्करम् ।
शालिं पिष्ट्वा पिबेद्गर्भविनिपातनिवर्तनम् ॥ १६ ॥
तरुणैर्नालिकेरस्य पुष्पैरौदुम्बरैः फलैः ।
अब्दैश्च कल्पितः क्काथो गर्भद्रावं निवर्तयेत् ॥ १७ ॥
लाक्षा यष्टीमधुकं क्षौद्रोपेतं सशर्करं लीढम् ।
पीता क्षौद्रोपेता मृद्वीका गर्भशूलहरा ॥ १८ ॥
पारावतशकृत्कल्को निपीतस्तण्डुलाम्बुना ।
गर्भिणीनामसृक्स्रावं निरुणद्धि सवेदनम् ॥ १९ ॥
मार्कवस्वरसं गव्यं क्षीरं चापि समं पिबेत् ।
अन्तर्वत्न्या भवेत्तस्या नैव गर्भपरिच्युतिः ॥ २० ॥
समङ्गाधातकीपुष्पक्षीरलोध्रमहोत्पलैः ।
न गर्भो निपतेत् पीतैर्नातिमात्रजलस्थितैः ॥ २१ ॥
पीता क्षीरेण सक्षौद्रा कुलालकरमर्दमृत् ।
सहसा प्रतिबध्नीयाद्गर्भध्वंसं न संशयः ॥ २२ ॥
कर्कटीमूलसंसिद्धं क्षीरं शूलहरं परम् ।
गर्भिणी तु बलाक्काथसिद्धं सायं प्रगेऽपि वा ॥ २३ ॥
क्षीरपिष्टमबलाऽक्षकं पिबेद्देवदालिकुसुमसोद्भवं रजः ।
शीघ्रमेव सुखसूतिमावहेन्नास्त्यतः परतरं तदौषधम् ॥२४॥
गर्भिण्याः सुखसूत्यर्थं किमन्यैर्मन्त्रभेषजैः ।
सहस्रप्रस्थमम्ब्वाशु मेयं पुत्रस्य मातुलैः ॥ २५ ॥
कारस्करास्थि सलिलेन विघृष्य लिम्पे-
न्नाभौ सुखप्रसवकाङ्क्षितसुन्दरीणाम् ।

---

१ 'गर्भभ्रंशं' इति पाठान्तरम् ।

तद्वद्विपं च करपादतलेषु बाले
जाते तमाशु सलिलैः परिशोधयेच्च ॥ २६ ॥
वारिघृष्टं विशालाया मूलमाज्येन संयुतम् ।
अधोमुखमधो नाभौ लिम्पेत्सद्यः प्रसूतिकृत् ॥ २७ ॥
परूषफलिनीवासाकाकमाचीशिफाः पृथक् ।
पिष्टा नाभेरधो लिप्ता गर्भनिष्क्रामणप्रदाः ॥ २८ ॥
पक्वं तिलोद्भवं नार्या विशल्यास्वरसेन च ।
हन्ति गर्भापरासङ्गं गुह्यनाभिकराङ्घ्रिगम् [1] ॥ २९ ॥
प्रपुन्नाटशिफा गाढं क्षुण्णा योनौ धृता भवेत् ।
क्षुण्णा सतैलवर्षाभूशिफा च सुखसूतिदा ॥ ३० ॥
तद्वन्मूर्धनि विन्यस्ता द्वित्रा स्नुक्क्षीरबिन्दवः ।
वचोग्रातिविषासर्पनिर्मोकैर्धूपनं भगे ॥ ३१ ॥
करञ्जतैलसंयुक्तैर्गर्भमाश्वेव पातयेत् ।
करवन्दां प्रयत्नेन गोमूत्रोपरि वेश्मनः ॥ ३२ ॥
स्थापयेत्तेन जायेत गर्भशल्यविनिष्क्रमः ।
स्वरसेनेषुपुङ्खाया कृतान्मधुकरस्य वा ॥ ३३ ॥
नस्यान्न स्याद्भयं स्त्रीणां मूढगर्भसमुद्भवम् ।
पुटदग्धाऽहिनिर्मोकमषीक्षौद्रेण चाक्तदृक् ॥ ३४ ॥
सहसैव विशल्या स्यान्मूढगर्भाऽपि गर्भिणी ॥ १/२ ॥
सिद्धार्थार्जुनपुष्पगुग्गुलुवचालाक्षामयूरच्छदैः
केशोशीरभुजङ्गशुक्तिसहितैर्धूपो गृहे निर्मितः ।
स्त्रीणां संप्रति मूढगर्भजनितां बाधामहिवृश्चिका-
नाखून् भूतगणान् पिशाचनिकरान् गेहान्निरस्यत्यलम् ॥
पीतं पुष्पलतापत्रं पिष्टं तण्डुलवारिणा ।
अपरां पातयेच्छालीमूलं मूत्रेण वाऽथवा ॥ ३६ ॥

---

१ 'गर्भाशयवराङ्गगम्' इति पाठान्तरम् ॥

चर्म पूतिकरञ्जस्य वायसोदुम्बरस्य वा ।
पिष्टं तुषाम्बुना पीतमपरां पातयेत् क्षणात् ॥ ३७ ॥
अपथ्याद्दैवयोगाद्वा जातं मूढं भिषग्वरः ।
तत्तल्लक्षणमालोच्य क्षणान्निर्बाधमाहरेत् ॥ ३८ ॥
कुक्षौ वातेन धृतो गर्भो वर्षाद्विकारकारी स्यात् ।
तत्र क्षीरं प्रपिबेत् सघृतं कोष्णं करोति सुखसूतिम्॥३९॥
पिष्ट्वा लिप्ते योनौ मूले खरमञ्जरीपुनर्नवयोः ।
नवसूतायाः शूलं योनिगतं सकलमपनयतः ॥ ४० ॥
सूतायाः कृशमुदरं पीतं तक्रेण मालतीमूलम् ।
मधुघृतपिष्टं व्योषं करोति धात्रीरसो निशया ॥ ४१ ॥
प्रसूतिसमये यस्या न स्रवेद्रुधिरं ततः ।
शूलं स्याल्लशुनं गन्धलक्ष्मीं च भक्षयेत् सुखम् ॥ ४२ ॥
सूतायाः पृष्ठकट्यादौ शोफः स्याद्यदि पाययेत् ।
मयूरमूलपथ्याभ्यां सिद्धमम्बु दिनत्रयम् ॥ ४३ ॥
कृसरां सघृतक्षीरां शर्करामधुसंयुताम् ।
स्तन्याभिवृद्धये धात्र्या भोजनं परिकल्पयेत् ॥ ४४ ॥
यष्टीमधुकसंयुक्तं गव्यं क्षीरं सशर्करम् ।
पीत्वा धात्री भवेद्भूरिस्तन्यापूर्णपयोधरा ॥ ४५ ॥
दुग्धेन सूतया पीतं शालितण्डुलजं रजः ।
विदारीकन्दचूर्णं वा प्रभवेत् स्तन्यवृद्धये ॥ ४६ ॥
कुमारीरात्रिकन्दाभ्यां विशालाशिफयाऽथवा ।
स्तन्यदोषं समुत्पन्नं हन्याल्लेपेन तत्क्षणात् ॥ ४७ ॥
कुर्वते यदि सूताया व्याधयो वेदनां भिषक् ।
कुर्यात्तत्तत्प्रतीकारैश्चिकित्सां शास्त्रकोविदः ॥ ४८ ॥
एकादश्यां प्रभाते शिशिरतरजलैर्मिश्रितैरुष्णतोयैः
स्नातो बालश्च मात्रा सह हितमचिराद्देहशौचं च कुर्यात् ।

शङ्खं वक्रेऽथ सूत्रं कटितटनिकटे नेत्रयोरञ्जनं च
द्वादश्यां सन्मुहूर्ते शकटनिरसनं नामधेयं च कुर्यात् ॥४९॥
दैवज्ञस्याज्ञया यत्र बालो जातो निकेतने ।
शकुनं तस्य निक्षिप्तं तस्य रोगहरं विदुः ॥ ५० ॥
अन्नप्राशनकालात् प्राङ्मुण्डनानि न कारयेत् ।
भस्मसिद्धार्थकौ तस्य मस्तके निक्षिपेत् सदा ॥ ५१ ॥

इति श्रीवैद्यकालिदासविरचितायां वैद्यमनोरमायां गर्भिणीचिकित्साधिकारो नाम त्रयोदशः पटलः ।

---

## अथ बालचिकित्साधिकारो नाम चतुर्दशः पटलः ।

जाताः केचिच्छिशवः क्रान्ताः स्युर्मार्गसङ्कटतः ।
शीतसलिलसंयुक्तैस्ताम्बूलैर्वीजयेद्वदने ॥ १ ॥
जातस्य पञ्चमदिने शुभदे मुहूर्ते
पञ्चायुधाभरणधारणमिष्टमाहुः ।
श्रीगोकुले मुररिपोरिव नन्दगोपो
रक्षां च बालजनको भसितेन कुर्यात् ॥ २ ॥
विधाय वेधाः प्रथमं नवानि द्वाराणि गर्भे सति किल्बिषेण ।
पूर्वेण पश्चात् पिदधाति पश्चादग्रेण शस्त्रस्य भिषक् प्रकुर्यात्(?)३
निष्ठीवे जृम्भायां दृक्स्पर्शे शौचं च सन्ध्ययोः कुर्यात् ।
लवणारिष्टच्छदनैः परिस्तरेदुपरि बालस्य ॥ ४ ॥
तुषमषीतिलजोदनपत्रकैः सहितपात्रयुतोदकदर्शनम् ।
सपदि दृष्टिविषं विनिहन्ति तत्रिनयनाभरणं भसितं यथा ॥५॥
यो गजेन्द्रविषाणाग्रलग्नमृत्समुपेतया ।
पुण्ड्रो रोचनया क्लृप्तः सर्वग्रहविमोक्षणः ॥ ६ ॥
छर्दिर्भवेद्यदि पयः पिबतोऽर्भकस्य
वक्त्रे मुहुर्वदनमारुतफूत्कृतेन ।

शीतोदकेन तु जयेज्जननी तु गण्डे
तं पाययेद्विषममङ्गुलिताडनेन ॥ ७ ॥
हायनत्रितयादूर्ध्वं स्तन्यं पिबति यः शिशुः ।
निवर्तयेत् क्रमान्निम्बपत्रलिप्तात् पयोधरात् ॥ ८ ॥
शूलानाहातिसारार्तं साटोपं जठरं शिशोः ।
बिन्दुभिर्बहुभिर्व्याप्तं दहेत् सूक्ष्मशलाकया ॥ ९ ॥
क्षुतः संजायते यस्य मध्ये भुक्तस्य यस्य वा ।
गात्रे कम्पप्रभो वातस्तावुभौ प्रोक्षयेज्जलैः ॥ १० ॥
रात्रौ जल्पति यो बालो दन्तान् संघट्टयेत्तथा ।
तावुभौ भवतां शम्भोः प्रदक्षिणपरौ निशि ॥ ११ ॥
यो मेहति कटे मूत्रं रात्रौ स्वप्ने दिने दिने ।
बालः कृष्णावतारस्य विष्णोः पादोदकं पिबेत् ॥ १२ ॥
क्षीरे वा सर्पिषि वा मूर्ध्नि गते सति शिशोः प्रमादेन ।
मूर्धनि रोमावर्ते धमयेन्मुखवायुना जननी ॥ १३ ॥
प्रमादात् पतितं बालं पालयेत् पादपांसुभिः ।
मृत्पिण्डेन ततो मूर्ध्नि त्रिः परिमृज्य प्रोक्षयेत् ॥ १४ ॥
बालगात्रे प्रमादेन क्षुतोद्भूतजलाणवः ।
पतन्ति चेत् क्षणादेव त्यजामीति वदेत् क्षुतम् ॥ १५ ॥
अनवधानतया गृहमार्जनी स्पृशति यद्यपि गात्रमथ क्षणात् ।
शिरसि दीपशिखा च शिशोः क्षणात् कनकपात्रजलेन विशोधयेत्
भीहेतुकस्य च निरीक्षणमात्रभीत-
बालस्य फालनिहितं भसितं शिवाय ।
धाराधरस्य परुषध्वनिनाऽतिभीत-
बालस्य चार्जुनकथाश्रवणं सुखाय ॥ १७ ॥
घण्टां कटीप्रदेशे च कण्ठे मूर्ध्नि करे क्रमात् ।
वचानिम्बेन्द्रवल्लीनां मणीन् बालः सदा धरेत् ॥ १८ ॥

नोद्वेगमस्य जनयेन्नैनं क्वचिदप्यपास्य गच्छेद्वा ।
अन्यस्तनहस्तासनशयनादपि परिहरेदेनम् ॥ १९ ॥
पूतीकशुक्तिकापाठामुस्ताक्वाथे शृतं घृतम् ।
पञ्चकोलयवक्षारैरामातीसारनुच्छिशोः ॥ २० ॥
स्तनन्धयस्य बालस्य हिक्का स्याद्यदि वेगिनी ।
मूर्ध्नि वक्षसि चाभ्यङ्गं कृत्वा तृणकणं क्षिपेत् ॥ २१ ॥
प्रसारणीकल्ककषायसिद्धं तिलोद्भवं नावनपानलेपैः ।
हिक्कां निजां नाशयति त्रिमासात् पौलस्त्यलक्ष्मीमिव रामभद्रः ॥
सव्यापसव्ययोगेन जिह्वां दन्ताग्रयोर्बहिः ।
प्रवर्तयेदयत्नेन सायं प्रातस्तु वाग्भवेत् ॥ २३ ॥
महोक्षशृङ्गसंलग्नमृद्गोरोचननिर्मितम् ।
तिलकं भूतवेतालकूष्माण्डादीञ्जयेच्छिशोः ॥ २४ ॥
रात्र्युग्राफणिनिर्मोकहिङ्गुनिम्बच्छदैः कृतः ।
स्यात्सिद्धोऽयं महाधूपो डाकिन्यादिप्रतिक्रिया ॥ २५ ॥
मञ्जिष्ठाद्रिनिशाकुचन्दनवचाहिङ्गुप्रियङ्गुद्रुम-
व्योषारग्वधजीरकारविवराभार्गीकरञ्जास्थिभिः ।
पिष्टैराजजलेन हन्ति रचिता वर्तिः समस्तान् ग्रहान्
स्नानोद्वर्तनपानलेपनविधौ धूमे च संयोजिता ॥ २६ ॥
ग्रहपीडितबालस्य ष्ठीवनं च क्षणाद्भवेत् ।
कुर्यात्तत्पार्श्वयोः शीघ्रं भेदं वै कंसभाण्डयोः ॥ २७ ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां बालचिकित्साधिकारो नाम चतुर्दशः पटलः ।

---

## अथ भूतग्रहाधिकारो नाम पञ्चदशः पटलः ।

उषसि पयसि पीतं पुण्डरीकस्य मांसं
जयति मनसिजातोपद्रवोन्मादतापान् ।

जनयति तनुपुष्टिं तद्धि मांसाद्मांसं
किमुत बलकरत्वं तस्य सद्योहतस्य ॥ १ ॥
मधुमधुकमागधीनां खर्जूरशतावरीकशेरूणाम् ।
सविदारीणां कल्कः पानादुन्मादमपहरति ॥ २ ॥
पुण्ड्रेक्षुकाण्डरेणुस्तु सस्तन्यस्तुल्यशर्करः ।
न्यस्तो घ्राणमुखे सद्यः सर्वोन्मादविनाशनः ॥ ३ ॥
रेणुः क्षीरेण संयुक्तः कर्णिकारप्रसूनजः ।
उन्मादपीडिते नस्यं मात्रया रचितो हितः ॥ ४ ॥
द्राक्षाब्दयष्टीमधुकखर्जूरहिमकणाम्भोभिः ।
स्तन्यमधुघृतसितेक्षुस्वरसेनोन्मादनाशः स्यात् ॥ ५ ॥
षोडशगुणकूष्माडस्वरसे साधितं घृतम् ।
यष्टिकल्कं प्रगे पीतमुन्मादापस्मृती जयेत् ॥ ६ ॥
पानाभ्यञ्जननस्याद्यैः पीतमत्युल्बणं जयेत् ।
धात्रीस्वरससंयुक्तमाज्यं हैय्यङ्गवीनवत् ॥ ७ ॥
ब्राह्मीस्वरसे सिद्धं कुष्ठवचाशङ्खपुष्पिकागर्भे ।
आजं पीतं सर्पिः सर्वापस्मारदोषघ्नम् ॥ ८ ॥
श्रीवासागरुदारुप्रियङ्गुवंशत्वगोतुविट्कुष्ठम् ।
साज्यं पिष्टमजाया मूत्रेण च्छायया शुष्कम् ॥ ९ ॥
तैर्धूपो ब्रह्मसहो नाम्नाऽपस्माररराक्षसपिशाचान् ।
भूतग्रहांश्च सर्पान् ज्वरं च चातुर्थकं हन्यात् ॥ १० ॥
सौभाग्यविहीना या पुष्पपीडिता च या भवेन्नारी ।
यासां मेहो भवति तासां च हितो भवेद्धूपः ॥ ११ ॥
एतद्धूपविधानैर्मन्त्री मन्त्रं जपेदेतम् ।
मन्त्रोऽत्र द्रितरणये स्वाहेति प्रणवयुक् पूर्वम् ॥ १२ ॥
सद्यं यावद्द्रवति बहुशस्तापयित्वा सुतापं
स्तन्यं प्रातः सुनिपुणभिषक् पाययेद्भ्रान्तचित्तम् ।

साज्यक्षीरं दशदिनमपि क्षीरमेवं प्रपीतं
स्तन्ये घृष्टं कतकतरुणं पाययेत् स्यात्सुखाय ॥ १३ ॥

द्वन्द्वं बलांशुमत्योश्च बृहतीगोक्षुरस्य च ।
द्वात्रिंशन्निष्कमेतेषां क्षुण्णं प्रत्येकमाहरेत् ॥ १४ ॥

द्रोणार्धे सलिले क्षिप्त्वा पादशेषे विपाचिते ।
अमृतास्वस्तिकवरीमूर्वाकन्यारसं पृथक् ॥ १५ ॥

कुडवं कुडवं दत्त्वा विसात्तौङ्गद्रुमात् फलात् ।
कदलीकन्दसाराच्च प्रत्येकं कुडवार्धकम् ॥ १६ ॥

दत्त्वा कल्याणकाख्यस्य घृतस्यौषधकल्ककम् ।
तस्मिन् विशालां हित्वा च हयगन्धां समावपेत् ॥ १७ ॥

क्षीराढके यथाशास्त्रं घृतप्रस्थं विपाचयेत् ।
उन्मादापस्मृती हन्यात् पित्तमत्युल्बणं तथा ॥ १८ ॥
धीमेधास्मृतिकृच्चैव दाहतृष्णाहरं परम् ॥ [1] ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां भूतग्रहाधिकारो नाम पञ्चदशः पटलः ।

---

## अथाक्षिकर्णव्रणग्रन्थिचिकित्साधिकारो नामः षोडशः पटलः ।

तुत्थस्यातपपक्वस्य गोमूत्रे च रसक्रिया ।
कुकूणकादिवर्त्मोत्थरोगराजिविनाशिनी ॥ १ ॥

अक्षिकूटे कफाकारं छित्त्वा मेदः समुद्धरेत् ।
वर्त्मरोगविनाशाय पिल्लादिशमनाय च ॥ २ ॥

विमृष्य करभौ प्रायः स्वेदयेन्नयने मुहुः ।
पिडका वर्त्मसंजाता नाशमायान्त्यसंशयम् ॥ ३ ॥

---

१ 'वराविशालावृद्धैलादेवदार्वेलवालुकैः । द्विसारिवाद्विरजनीद्विस्थिरा-फलिनीनतैः ॥ बृहतीकुष्ठमञ्जिष्ठानागकेशरदाडिमैः । वेल्लतालीसपत्रैला-मालतीमुकुलोत्पलैः ॥ सदन्तीपद्मकहिमैः कर्षांशैः' इति कल्याणघृतक-ल्कद्रव्याणि ।

चूर्णं नरास्थिजं स्तन्यैः कांस्ये घृष्टं प्रलेपयेत् ।
नयने बहिरन्तश्च कुकूणादिहरं परम् ॥ ४ ॥

तुत्थाभयाफेनशिरःकपालैर्जम्बीरसारे मसृणं प्रपिष्टैः ।
वर्तिः कृता स्तन्यविघर्षिता स्यात् पिल्लार्मपूयालसपोथकिघ्ना॥५॥

त्रिफलाकल्कमध्यस्थं परिदग्धं तुषानले ।
तुत्थं तुषाम्भसा पिष्टं वर्त्मरोगविनाशनम् ॥ ६ ॥

पलाशवृक्षक्षतजं ससैन्धवं गौडीपिशाचीस्वरसेन पिष्टम् ।
क्षौद्रेण चन्द्रेण च संयुतं द्राग्विनाशयेद्वर्त्मरुजं च तीव्राम् ॥ ७ ॥

असितपललचूर्णं प्रत्नचिञ्चामयाभ्यां
समधरणधृताभ्यामल्पतीक्ष्णान्विताभ्याम् ।
नरसलिलयुताभ्यां मातुलाभ्यां मुरारे-
मसृणतरमपि पिष्टं वर्त्मरुङ्नाशनाय ॥ ८ ॥

श्वेतपूलासमूलत्वक्कल्कैश्चिञ्चाम्लकेन च ।
व्रणेषु तापरागौ च चिञ्चापुष्पोद्भवैर्जयेत् ॥ ९ ॥

पिष्टं कंसद्वयाघृष्टं स्तन्ययुक्तं दृगर्तिनुत् ॥ $\frac{१}{२}$ ॥

काञ्जिकायससंपिष्टं कंसाभ्यां घर्षितं बहिर्लिप्तम् ।
चिञ्चारुष्यङ्कुरमचिराद्बालस्य कुकूणकं जयति ॥ १० ॥

अन्तर्बहिर्नयनयोर्गिरिकर्णिकायाः
पुष्पं गवां पयसि पेषितमर्भकाणाम् ।
संयोजयेद्दशनजन्मनिदानभूतं
रोगं कुकूणकमपोहति शीघ्रमेव ॥ ११ ॥

मस्तुना सह ताम्रस्थं मधुकं स्यात् कुकूणके ।
सैन्धवं च तथा पथ्यातण्डुलं मस्तुघर्षितम् ॥ १२ ॥

अत्यन्तपक्वकदलीफलमार्जनेन
दाहास्त्ररागशमनं भवति क्षणेन ।

---

१ 'कंसाभ्याम्' इति लक्षणया ग्राह्यम् । २. 'भवतीक्षणानाम्' इति पाठान्तरम् ।

सीमन्तिनीपयसि मेघरवस्य मूलं
संघृष्य तेन परिषेचनमुत्तमं च ॥ १३ ॥
इक्षुमूलमधुकाञ्जनदार्वीलोध्रगैरिकपटुत्रिफलानाम् ।
लेपनं बहिरिदं नयनानां क्षीरपिष्टमपहन्ति विकारम् ॥ १४ ॥
आतपालोकपीतानां सबाष्पाणां सहोष्मणाम् ।
समेघनादयष्ट्याह्वं स्तन्यं सिञ्चेद्दिनत्रयम् ॥ १५ ॥
सबिसं सविदारि सोत्पलं ससिताकंसकशेरुचन्दनम् ।
मधुकेन समं त्वजापयः परिषेकेण दृगामयाञ्जयेत् ॥ १६ ॥
रोहिणीतुत्थकह्लारोत्पलकेसरनिर्मिता ।
वर्ती दार्वीशृतेनापि पित्तार्मव्रणनाशिनी ॥ १७ ॥
त्रिफला मधुकेन संयुता कतकेनापि सदारुरात्रिणा ।
नयनामयजित्, सुसेकतः सलिलं तुङ्गतरोर्विपाचितम् ॥१८॥
प्रस्थे पयसि संपक्कं गवां पथ्याचतुष्टयम् ।
[1]आपनं तेन संपिष्टं बहिर्लिप्तं दृगर्तिनुत् ॥ १९ ॥
बाष्पस्वेदेन दुग्धस्य गवां नेत्रार्तिनाशनम् ।
स्यादेरण्डशिफासिद्धपयसाऽऽश्च्योतनं तथा ॥ २० ॥
मेघनादशिफासमानतडागशुक्तिशृतं पयः ।
सेचितं च निहन्ति तोदमसह्यमक्षिभवं नृणाम् ॥ २१ ॥
[2]तत्फलं घृतभर्जितं परिपेषितं निशि क्षिपेत् ।
सव्रणेऽक्ष्णि निर्व्रणं भवति क्षणात्त्रिचतुर्दिनैः ॥ २२ ॥
चिञ्चापत्रस्वरसं पयसा संयोज्य घर्षितं कस ।
लिप्तं बहिर्नयनयोः शमयति रागाश्रुतोदसंरम्भान् ॥ २३ ॥
कन्यास्वरससंपिष्टा त्रिफला सप्तवारकम् ।
पुनस्तस्याः पुटे स्विन्ना सक्षौद्रा नेत्ररोगहा ॥ २४ ॥

---

१ आपनं मरिचम् । २ तस्य पूर्वश्लोकस्थस्य मेघनादस्य फलं तत्फलम् ।

बिल्वशठालुकरञ्जफलास्थिव्योषनिशाद्वयशङ्खपुनर्भ्वैः ।
तुल्यमथैभिरियं गुटिका द्राङ्नेत्रगतामयहा जलपिष्टा ॥ २५ ॥

दार्वीवल्कलसैन्धवाञ्जनकणातुत्थाब्धिफेनोषणै-
र्यष्टीताम्रसमन्वितैः सुमसृणं क्षौद्रेण पिष्टैः कृता ।
एषा हन्ति रसक्रिया नयनयोः पिल्लादिवर्त्मामयान्
स्रोदस्रावनिशान्ध्यशुक्लतिमिराण्यन्यांश्च नेत्रामयान् ॥२६॥

दुग्धपात्रपक्वमर्कबीजमाशु नाशये-
दन्धकारमक्षिसंभवं नृणां सुनिश्चितम् ।
तद्वदेव शुक्लपुष्पमुष्टिमूलमप्यलं
ताम्रपात्रघृष्टमम्लकाञ्जिकाच्छवारिणा ॥ २७ ॥

परिणतनक्तमालतरुवल्करजः कुडवं
कुडवमथोषणस्य लिकुचस्य फलस्वरसम् ।
द्विकुडवमाढकेन पयसा च गवां सहितं
दिवसमुखे विशुद्धकलशेऽथ सुसंस्क्रियताम् ॥२८॥

अन्येद्युर्बहुशः खजेन मथितात्तस्माद्गृहीत्वा रसं
प्रक्षाल्य प्रबलेन कंसयुगलेनाकार्ष्ण्यभावं शनैः ।
संघृष्येन्दुविमिश्रितं तिमिरजित् स्यादञ्जितं स्वल्पशः
सायं सीसशलाकया प्रतिदिनं नाम्ना त्विदं भास्करम् ॥

पिप्पलदलकुवलयदलमास्येन चर्वणं चिरं कृत्वा ।
दृढधवलाम्बरनिहितं सिञ्चेद्दृशि तिमिरनाशाय ॥ ३० ॥

अश्वत्थपत्रकुवलयदलचन्द्रैः कृता गुटिका ।
तिमिरापहा प्रसिद्धा भास्करकिरणावलीव दिवसमुखे ॥३१॥

सितगिरिकर्णिकापुष्पान्नन्द्यावर्तस्य पुष्पाच्च ।
स्वरसेन तालवृन्तात् स्त्रीस्तन्येनापि सुमसृणम् ॥ ३२ ॥

दृषदि पिष्टं केशक्षारं मधुना निशया च संयुक्तम् ।
नेत्रे निषिच्य नचिरात्तिमिरार्तो भवेद्भास्वान् ॥ ३३ ॥

चिञ्चास्वरसनिघृष्टं मरिचं सायन्तने तथा साज्यम्।
अक्षिनिषिक्तं शमयति कण्डूं तिमिरं च वातोन्थम ॥ ३४ ॥

यन्मातुलुङ्गपिचुमन्दवराकरञ्ज-
जम्बीरशिग्रुफलबीजरजः प्रगृह्य ।
चिञ्चाफलाम्लरसमर्दितमातपात्तं
तैलं जयेत्तिमिरमिन्दुविमिश्रितं द्राक् ॥ ३५ ॥

मूलं पालंक्यायाः कृष्णाङ्घ्रौ च तुरगगन्धायाः।
मूलं पृथक् पृथक् स्यान्निष्कं तुत्थं चतुर्निष्कम् ॥ ३६ ॥
जम्बीरसारपिष्टा गुटिकेयं नेत्ररोगतिमिरहरी । ३
दिनावसाने रुधिरं पलाशाद्दादाय नेत्रे सहसैव दद्यात्
नक्तान्ध्यमाश्वेव विजित्य जीवेच्चन्द्रातपे चाक्षरवाचकः स्यात् ॥

खद्योतैः सह भक्षितं दिनमुखे रम्भाफलं नाशये-
न्नक्तान्ध्यं तिलजोपणाक्षतयुतैः कोशातकीपल्लवैः ।
सिद्धं तद्वदपूपमन्यदपि तज्जम्बूप्रवालान्वितं
स्विन्ना छागशकृत्कणोपणहविःसिद्धा वरिष्ठा तथा ३८

लूतस्य वृत्तधवलं गृहमाशु किञ्चि-
द्भृष्टं रसेन तलपोटभवेन(?) पिष्ट्वा ।
कंसद्वयेन महिषीनवनीतयुक्तं
पिल्लापहं बहलबाह्यविलेपनेन ॥ ३९ ॥

पथ्यातुङ्गजलेनैव पिष्ट्वा स्फटिकजं रजः ।
महिषीनवनीतेन कंसवृष्टं तु पिल्लजित् ॥ ४० ॥
धर्मोध्वगतनुजातं लवणं संगृह्य पाणिनाऽऽक्तेन ।
लिकुचरसक्षौद्राभ्यां कंसे संघृष्य योजयेत् पिल्ले ॥४१॥
मधुपिष्टो लवणमलो माहिषहय्यङ्गवीनसमभागः ।
पिल्लजिदाजविषाणं तद्वत्तेनैव लेपितं दृषदि ॥ ४२ ॥

वर्त्तोऽर्कतूलकृतया शशविट्चूर्णेन पूरितोदरया।
दीप्तादीपादाप्ता मुष्णाति मषी च पिल्लगदम् ॥ ४३ ॥
पट्टकुनटीवरटीगृहमागधिकाजातिकुसुमरजनिरजः।
पिल्लं हरेन्निघृष्टं क्षौद्रयुतं कांस्यताम्राभ्याम् ॥ ४४ ॥
पोत्रीकरभयोर्दन्तं हृदयास्थि च कुक्कुटात्।
कपालं कूर्मजं स्तन्यैः पिष्टं समधु पुष्पहा ॥ ४५ ॥
नयनजनितपुष्पं यक्षदृक्पल्लवस्य
स्वरसमपनयेद्द्राग्वासरान्ते निषिक्तम्।
सिकततृणकणादीन् पातयत्यक्षिगान् द्राक्
सपदि सुपरिजग्धं तत्र पत्तूरमूलम् ॥ ४६ ॥

तृणादि कीटानि तथैव वालुका यदृच्छया नेत्रगतानि चेत्ततः।
क्षणेन निष्ठीवनमुत्तमं विदुः किमौषधैः स्तन्यनिषेचनादिभिः ॥
अनलेन सुतप्तमृत्सुपिण्डात्स्तनजाक्ताज्जनितः स बाष्पयोगः।
अभिघातसमुद्भवं विकारं नयनस्याशु विनाशयेदवश्यम् ॥४८॥
निरुक्छोफो भवेन्नेत्रे दहेत्सपदि माक्षिकैः।
नवं कपालं कापित्थं मुहुर्लिम्पेत्सनागरम् ॥ ४९ ॥
तामलकी नेत्ररुजं पिष्टा स्तन्येन ताम्राक्ता।
सैवाक्षिरोगमभिनवमपनयति विलेपनान्मूर्ध्नि ॥ ५० ॥
संचूर्णितं तैलसमन्वितं च विघट्टितं माधवमातुलाभ्याम्।
निष्पीड्य वस्त्रेण निषेचनेन पट्टुः पैटु स्यान्नवनेत्ररोगे ॥ ५१ ॥
नवनवनीतसनाथं कल्कं कृष्णारिमेदपत्रोत्थम्।
बहिरालेपेन जयेदर्मादीनश्रुतोदशोफाढ्यान् ॥ ५२ ॥
वासादलकाञ्जिकया वासः पीतो दृशि स्पर्शात्।
अर्माश्रुतोदकण्डूरागोच्छूनादिजित्सहसा ॥ ५३ ॥

---

१ 'पट्टुः समर्थम्'।

मरिचतैलमहौषधदुग्धमित्युभयमर्पितमक्षिण पृथक् पृथक् ।
कफमरुद्भवनेत्रविकारान्मदनबाणविकारमिवात्मवान् ॥ ५४ ॥

निशास्वरससंसिक्तचेलमवणपाणिना ।
परामृशेदभिष्यन्दजातमश्रुं मुहुर्मुहुः ॥ ५५ ॥

तुत्थमामलकफलत्वङ्मरिचं श्रुतिसागरेन्दुसमभागम् ।
जम्बीरसेन पिष्टं सक्षौद्रं चक्षुषोर्जयेद्रोगम् ॥ ५६ ॥

मरिचं श्वेतपूलासं हंसपादी च तुत्थकम् ।
एकद्वित्रिचतुर्भागं निमिना गुप्तभाषितम् ॥ ५७ ॥
चिञ्चापत्ररसे पिष्टा सर्पाक्ष्यक्ष्यामयापहा ॥ १/२ ॥

कदलीमूलभृङ्गनयुगलार्द्रकलशुनकन्दसंभूतम् ।
अम्बु निहन्ति कदुष्णं कर्णरुजं कर्णपूरणतः ॥ ५८ ॥

बर्बरीमूलनिर्यूहे छागमूत्राम्भसाऽपि च ।
त्रिसिन्धुरादिभिर्दध्ना तैलं सिद्धं स्रुतिं जयेत् ॥ ५९ ॥

कृतमालफलत्रिशूलिपादैः स्वरसे तस्य च दुग्धसार्धसिद्धम् ।
तिलजं श्रुतिशूलपूयकण्डूक्रिमिजालं विनिहन्ति शीघ्रमेव ॥६०॥

चिञ्चाफलस्वरससाधिततैलमग्र्यं
जम्बीरनीरशृततैलमपि प्रशस्तम् ।
भूनागसर्जशृततैलमतीव शस्तं
कर्णे सशूलिनि रहस्यपराङ्मुखे च ॥ ६१ ॥

वामे पाणौ गृहीत्वा सतिलजलवणान्यर्कपत्राणि वैद्यः
सोपानोत्सेधरूपं हुतवहहतया लोहयष्ट्या च दीर्घम् ।
कर्णे नीत्वा तदुत्थैर्जलकणनिकरैः पूरयेत्कर्णशूले
हा हेत्युक्त्वा प्रधावन्त्यहमहमिकया शेषरोगाश्च तत्स्थाः ॥

तैलं दुग्धं पयो वापि संशृतं श्रवणे क्षिपेत् ।
सपूयपूतीन् जन्त्वादीन् जयेदार्कमथापि वा ॥ ६३ ॥

लिकुचफलेऽल्पं लवणं निक्षिप्य विघृष्य तत्स्वरसम् ।
त्रिदिनं श्रवसि विदध्याच्छूलं पूयं च नाशयति ॥ ६४ ॥
महिषीनवनीतेन जलौकाहयगन्धयोः ।
चूर्णं संमिश्र्य संपक्वं पीतं कर्णं विवर्धयेत् ॥ ६५ ॥
महिषीनवनीतयुतं गोशृङ्गवचाश्वगन्धबहुमूलम् ।
दिनकरतप्तं कुर्यादंसस्थललम्बिनौ कर्णौ ॥ ६६ ॥
कबरीशुष्कलाङ्गूलवासितं तिलजं शिशोः ।
कर्णस्रावं जयेत्तूर्णं कुलीरवसया यथा ॥ ६७ ॥
[1]कटुत्रयसमानांशा व्रणघ्नी पीनसापहा ।
कषायचूर्णलेहाद्यैः सेविता निशि सादरम् ॥ ६८ ॥
मण्डूकपर्णीमरिचकुलत्थैः साधु साधितः ।
कषायः पीनसार्तिघ्नः कोष्णाम्बुपिबतां नृणाम् ॥ ६९ ॥
दुग्धार्कपत्रभूतिर्महिषीनवनीतमिश्रिता लिप्ता ।
दन्तच्छदजातानां रोगाणां नाशने शस्ता ॥ ७० ॥
हिमाम्बुपरिपातेन संजातमधरव्रणम् ।
निशि प्रशमयेन्नाभिस्तैलेन परिपूरिता ॥ ७१ ॥
चूर्णं हरितमञ्जर्याः सविश्वं श्लक्ष्णमर्दितम् ।
अन्तर्बहिश्च तद्वक्त्रे लिम्पेदन्तरुजापहम् ॥ ७२ ॥
बकुलजटाभवकल्कः पयसा पीतः प्रगे त्रिदिनम् ।
दृढतरमूलान् कुरुते दन्तान् वृद्धस्य किमुत बालानाम् ॥ ७३ ॥
बाणपुङ्खशिफा क्षुण्णा दन्तमूले श्रिता जयेत् ।
दन्तरोगांस्तु यावत् प्राक् दन्तधावनमन्वहम् ॥ ७४ ॥
गाढताडनविलुप्ततण्डुलैस्तुल्यभागलवणं मुखोदरे ।
धारयेद्दिनमुखे मुखामयं वासरत्रितयसेवितं जयेत् ॥ ७५ ॥

---

१ 'शुण्ठीमरिचकृष्णाभिस्तुल्याभिः साधु योजितम् । समीरितं भिषक्श्रेष्ठैस्त्र्यूषणं च कटुत्रयम् ॥'

निष्ठीवेद्दिष्टिते मोहात्तच्च कण्ठरुजापहम् ।
गोमये ष्ठीवनं कुर्यात्तत्र मुस्तां च भक्षयेत् ॥ ७६ ॥
मूलमपराजितायाः समरिचमास्यस्थमाशु शूलहरम् ।
तद्दलमपि दिवसमुखे कुवलयमपि बोधिपत्राख्यम् ॥ ७७ ॥
सह शुण्ठीपूगफलैर्वा मरिचगोमूत्रनालिकेरजलैः ।
क्वथितैरधिजिह्वादीन् कवलो विहितः प्रणाशयति ॥ ७८ ॥
नेत्रप्रक्षालनात् पूर्वं प्रातर्गण्डूषधारणम् ।
आस्यलूताविनाशाय केतकं ष्ठीवयेत्त्र्यहम् ॥ ७९ ॥
आस्यस्पृष्टं ग्रासमाज्येन मिश्रं रात्रौ दद्यान्मद्यपायी त्रिरात्रम् ।
लूतं हन्यादास्यजं यत्र यत्र प्रादुर्भूतं तत्र तत्रैव तद्वत् ॥ ८० ॥
गण्डीराख्यज्वलनहपुषाबाणपुङ्खाङ्घ्रिबाण-
शौण्डीमूलैः सममिति समैर्विश्वमेषां कषाये ।
सिद्धं तैलं वदननिहितं वक्त्ररोगानशेषा-
नेलाशुण्ठीमगधमरिचोद्भूतकल्कं निहन्ति ॥ ८१ ॥
सर्पिस्तु नसि विन्यस्तं मधुकेन समायुतम् ।
शिरोर्तिं हन्ति स्वेदो वा पायसान्नेन[1] मूर्धनि ॥ ८२ ॥
मरिचस्य हरिद्रायाः शुण्ठ्या वा रेणुभिः कृता गुलिका ।
तैलाक्ता संलिप्ता ललाटपट्टे शिरोरुजं हन्यात् ॥ ८३ ॥
वातपित्तजनितं शिरोरुजं नाशयेन्मधुककल्कसाधितम् ।
नालिकेरपयसा शृतं त्विदं तैलमर्दितहरं च नावनात् ॥
सकृज्जिघ्रति विश्वोग्राभस्मजातरजांसि यः ।
शिरस्तोद्भवं दुःखं न जानात्येव निश्चितम् ॥ ८५ ॥
सूर्यावर्ते नस्यं कुर्यात्स्तन्येन विश्वयुक्तेन ।
अथवा तस्यागमने भुञ्जीत षड्रसोपेतम् ॥ ८६ ॥

---

१ 'अर्धावशिष्टे क्वथनात् क्षीरेऽष्टांशांश्च तण्डुलान् । पचेन्नातिद्रवघनं पायसान्नमिदं स्मृतम् ॥'

हिममधुकमधूकसैन्यगर्भं भुजगलतारससाधितं तिलोत्थम् ।
शिरसि रुजमपाकरोति कण्डूं कचशतनं च करोति हस्तकेशम् ॥

वरायाः क्वाथसंसिद्धक्षीरोत्थदधिसाधितम् ।
सर्पिर्मधुकसंसिद्धं नस्याद्वै मूर्धरोगजित् ॥ ८८ ॥
कर्दमे निखनेत् केशान् तत्क्षणं शिरसि च्युतान् ।
डुण्डुकीकृत्य (?) सुस्निग्धकेशभारभरो भवेत् ॥ ८९ ॥
रोमाणि जनयेद्भृङ्गरसो जित्वेन्द्रलुप्तकम् ।
चिञ्चामलकयोश्चापि काललोहसमन्वितः ॥ ९० ॥
अङ्कोलबीजं द्वात्रिंशत्पलं सम्यक् पचेज्जले ।
द्विद्रोणे पादशेषे तु तैलं तत्पतितं क्षिपेत् ॥ ९१ ॥
प्रस्थोन्मितं वराक्वाथे काललोहसमन्वितम् ।
कालारिमेदसंभूतक्वाथप्रस्थेन योजयेत् ॥ ९२ ॥
बकुलस्येन्द्रवल्ल्याश्च कुमारीभृङ्गराजयोः ।
चिञ्चामलकयोश्चापि मालतीनालिकेरयोः ॥ ९३ ॥
स्वरसं केतकाञ्चैव, कल्कं दत्त्वा पचेत् पुनः ।
बिभीतकास्थिसंभूतं कुडवं, कुडवं तथा ॥ ९४ ॥
गणादेलादिकाच्चैव, तदभ्यङ्गे सुयोजितम् ।
केशानां दीर्घकृष्णत्वं करोति च निहन्ति च ॥ ९५ ॥
पीतत्वं पिञ्जरत्वं च पलितं चेन्द्रलुप्तकम् ।
अश्विभ्यां निर्मितं श्रेष्ठं केशजन्मनि पूजितम् ॥ ९६ ॥

पुराणभित्तौ सलिलं मुहुः क्षिपन् प्रमर्द्य मृद्वीं परिगृह्य तन्मृदम् ।
प्रलेपयेदङ्कुरकामुके व्रणे क्षुपोदकीं वा सघृतां जटीं वा ॥ ९७ ॥

---

१ 'एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीफलम् । शुक्तिर्व्याघ्रनखोऽमराह्वमगरुः श्रीवासकं कुङ्कुमं चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥' इत्येलादिगणः ॥
२–'शटीं' इति पाठान्तरम् ।

व्रणेषूत्पद्यमानेषु लालां सिंचेन्मुहुर्मुहुः ।
कुष्ठेष्वपि जगत्यस्माद्विद्यते न महौषधम् ॥ ९८ ॥
वराटीगेहसंयुक्तं सुगन्धासर्षपगन्धयोः ।
मूलं तैले विपक्वं स्याद्दुष्टिपस्नुव्रणनाशनम् ॥ ९९ ॥
द्रुतजातमतिमृदुकठिनं नाशयति व्रणं चिरन्तनं चापि ।
स्विन्नं विमृज्य लिप्तं स्नुकपत्रं पञ्चषैर्दिवसैः ॥ १०० ॥
तिलारनालसंपक्वा कुमारी पाचयेद्व्रणान् ।
केवलाऽथ कुमारी वा पक्वापक्वविशङ्कितान् ॥ १०१ ॥
आमे वा पच्यमाने वा पक्वे वा कन्यकां व्रणे ।
स्विन्नां त्रिनिर्गतान्त्रां च निक्षिपेत्संभ्रणश्यति ॥ १०२ ॥
कैडर्यस्वरसे सिद्धं तन्मूलच्छदरात्रिभिः ।
तिलतैलं निहन्त्याशु व्रणान् दुर्गन्धदुर्जयान् ॥ १०३ ॥
तदहः पतितैः पत्रैरश्वत्थोत्थैरशोषितैः ।
संचूर्णितैर्निपिष्टैश्च लेपेनाशु जयेद्व्रणम् ॥ १०४ ॥
परिणतपरिशुद्धं पत्रसर्ङ्गं कदल्याः
प्रहरति परिकोथोद्भूतपूयं व्रणानाम् ।
उपनहनविधानाल्लेपयेद्दोषहीनं
तिलजमपि विपक्वं क्षुद्रनाथस्य(?)पत्रैः ॥ १०५ ॥
स्वरसे मूत्रे च भृतं लिकुचनिशाभ्यां च सुरभिपुरुषाभ्याम् ।
तैलं लवणांशयुतं व्रणशुद्धिं विरोपणं च तत् कुरुते ॥ १०६ ॥
तिन्तिण्यङ्कोलधत्तूरपुनर्नवशिफान्वितैः ।
धान्याम्लक्वथितैः पूर्वं स्वेदयेत्तिलजैर्व्रणम् ॥ १०७ ॥
हरिद्राधातकीमूलत्वक्कृष्णामरिचोद्भवैः ।
चूर्णैर्युक्तं भवेत्तसं व्रणे तान्तवसंयुतम् ॥ १०८ ॥

---

१ 'लिम्पेत्' इति पाठान्तरम् । २ श्लोकद्वयमेतन्न दृश्यते केषुचित् पुस्तकेषु ।

निक्षिपेद्वहुशस्तैलं व्रणा रोहन्ति निश्चितम् ।
जीर्णं च नालिकेरस्य तैलं हन्याद्व्रणं द्रुतम् ॥ १०९ ॥

तत्क्षणपतितं कोष्णं गवां करीषं व्रणं हन्यात् ।
सुनिषण्णकल्कलेपस्तद्वत् स्याच्छाकिनी च पटुयुक्ता ११० ॥

भूधात्रीमूलसिद्धं पयसि तिलभवं लेपनेनाशु हन्या-
दुष्टं स्रावाढ्यमुग्रं व्रणमणुसुषिरं दीर्घकालानुपक्तम् ।
दुग्धं न्यग्रोधवृक्षोद्भवमपि निहितं जन्तुजालं व्रणेषु
प्रातर्मध्यंगतेऽर्के दिवसपरिणतौ चाप्तशास्त्रोक्तमेतत् ।१११।

व्रणहानक्तमरिचैरेकार्धचरणांशकः ।
क्षुण्णैर्भास्करसंतप्तं तैलं सर्वव्रणप्रणुत् ॥ ११२ ॥

स्तन्येन मसृणं पिष्टं पुष्पकुड्मलपल्लवम् ।
दुष्टव्रणेषु सर्वेषु युञ्ज्यादेरण्डसंभवम् ॥ ११३ ॥

प्रणाशयेत् समं चैलं तैलाभ्यक्तं व्रणेऽर्पितम् ।
यामादभ्यक्तमुद्धृत्य भित्तौ लग्नं तु रोपयेत् ॥ ११४ ॥

कुष्ठोद्भवं व्रणमपोहति शीघ्रमेव
कर्पूरतैलमसकृत् पिचुना निषिक्तम् ।
सारुष्करं तिलमहर्मुखभक्षितं च
भक्तिर्यथा तिमिरवैरिपदार्पिता तम् ॥ ११५ ॥

प्रतप्य संचूर्ण्य तिलोद्भवान्विता पुराणकुष्ठव्रणहा हरीतकी ।
तथैव शाखोटकसंभवं पयः पुराकृतं पापमिवेश्वरस्मृतिः ॥११६॥

सद्योव्रणेषु सहसा विदधीत धीमा-
नक्षीवपत्रतिलकल्कमथाज्यमिश्रम् ।
अव्रीत(?)भूमिरुहवल्कलकल्कमीष-
दाज्येन युक्तमपि रोपयतीति सिद्धम् ॥ ११७ ॥

---

'चाङ्गेरीसदृशैः पत्रैः सुनिषण्णश्चतुर्दलः । शाको जलान्विते देशे चतुष्पत्रीति कथ्यते ॥'

क्षुण्णं मृदितं लवणं सिञ्चेन्निष्पीड्य तदनु बध्नीयात् ।
सद्योव्रणे त्रिदिवसं कुट्टितनिष्पावपल्लवं व्रणजित् ॥ ११८ ॥

दूर्वायाः खरमञ्जर्याः सोमराज्याश्च पल्लवैः ।
बध्नाति बन्धनं क्षुण्णैर्व्रणे शोणितनिःसृतिम् ॥ ११९ ॥

अपामार्गदलालेपः सद्यो बध्नाति शोणितम् ।
अतिप्रवृत्तमप्याशु सेतुबन्ध इवोदकम् ॥ १२० ॥

अकिञ्चनानामधिपस्य पत्रं स्तन्येन संपेष्य समर्पयेद्द्राक् ।
सद्योव्रणे रोपणमाशु वाञ्छन् कल्कं च दद्यादथ किङ्किसस्य ॥

कुण्डलीकिसलयं ससैन्धवं नाशयेत्सपदिसंभवं व्रणम् ।
नाशयेदथ तिलोद्भवं तथा तेन सिद्धमपि नात्र कौतुकम् १२२

जीवन्तीवल्कस्य सारं संपेष्य लेपयेत्त्रिदिनम् ।
पिच्छिलभावादूगूढं संपीड्य शमयेद्व्रणं नियतम् ॥ १२३ ॥

भृष्टतण्डुलमषी सुपेषिता स्विन्नपीडितसुधाफलाम्बुना ।
भिन्नमस्थि पिशितं च वेदनां सा सुखं नयति लेपनाद्ध्रुवम् ॥

भङ्गे पूर्वमतीव शीतलजलैः सिञ्चेत्तदाऽऽर्द्राम्बरं
संपेष्य त्रिदिनं पुनः पटुयुतं तैलं प्रलिम्पेन्मुहुः ।
चिञ्चामुष्णजलेन तैलसहितां पीत्वैकरात्रं पुन-
र्लाक्षाचूर्णकृताढ्यमौष्ण्यरहितं गृष्टेश्च दुग्धं पिबेत् ॥१२५॥

भग्ने नम्रे जाठरे वाऽस्थ्नि सम्यक् स्थाने स्थाने संनिवेश्याम्बरेण ।
तैलाक्तेनोद्बध्य तैलैः सुखोष्णैः सिञ्चेच्छेषं वातभैषज्यवच्च १२६

कोरदूषाक्षतान् भृष्ट्वा पिष्ट्वा भङ्गे प्रलेपयेत् ।
चिञ्चास्थिमृत्कपालाम्रत्वक्कल्कं वा प्रलेपयेत् ॥ १२७ ॥

तार्क्ष्यं द्विनिशां दन्तीं श्वेतां[1] ज्योतिष्मतीमरिष्टदलम् ।
मञ्जिष्ठां चालिम्पेद्भगन्दरे मूत्रपिष्टानि ॥ १२८ ॥

---

१ श्वेता सिता.

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
विडङ्गेन्द्रयवैः पाठाहिङ्गुभार्गीवचासितैः ॥ १२९ ॥
सर्षपातिविषाजाजीजीरकैः कुष्ठसंयुतैः ।
गजकृष्णाजमोदाभ्यां कटुकीचूर्णमिश्रितैः ॥ १३० ॥
समभागान्वितैरेतैस्त्रिफला संमिता भवेत् ।
त्रिफलासहितैरेतैः समभागश्च गुग्गुलुः ॥ १३१ ॥
एतत्संचूर्णितं सम्यङ्मधुना सुपरिप्लुतम् ।
नाम्ना तु योगराजोऽयं भगन्दरहरः परः ॥ १३२ ॥
अर्शांसि वातगुल्मं च पाण्डुरोगमरोचकम् ।
नाभिशूलमुदावर्तं प्रमेहं वातशोणितम् ॥ १३३ ॥
महान्तमग्निसादं च कासश्वासं च कामलाम् ।
रेतोदोषोत्थितान् रोगान् योनिदोषोत्थितान् गदान् १३४
निहन्यादाशु तान् सर्वान् दुर्वारानप्यसंशयम् ।
एतन्निषपरिहारं च पानभोजनमैथुने ॥ १३५ ॥
सन्तताभ्यासयोगेन वलीपलितनाशनम् ॥ १/२ ॥
हरीतकीशिग्रुकरञ्जभास्वत्पुनर्नवासैन्धवविश्वमूत्रैः ।
पिष्टैः प्रशस्तः पिटकासु लेपो ग्रन्थ्यामपच्यामथ विद्रधौ च ॥

पाकोन्मुखानि बृहतीकुसुमोद्भवानि
सूत्रावृतानि सुकरीषपुटे निधाय ।
दग्ध्वा कुकूलदहनेन च तानि हन्यु-
र्मेदोविकारजनितानचिरेण कोठान् ॥ १३७ ॥
गुडगृहधूमचूर्णसमुदायविलेपनकं
कफपवनोद्भवग्रथितशोफरुजाबहुलम् ।
व्रणमथ हन्त्यनवं जनयेत् सुखमाशुतरं
त्रुटिघृतलेपनं च विपरीतगुणं त्रिदिनात् ॥१३८॥

परिणतसूरणकन्दं सनागरं तोयसंपिष्टम् ।
मेदोग्रन्थिहरं वै लिम्पेद्बहुशश्च सप्ताहम् ॥ १३९ ॥
स्वरसेन काकमाच्याः पिष्टा शुण्ठी जयेत् कोठान् ।
मुनितरुदलरससंपिष्टा सा च करीषस्य वा स्वरसे ॥१४०॥
कंसे तैलेन संघृष्टं कृष्णातण्डुलकण्डनम् ।
उत्पित्सुमनिलाल्लेपाद्ग्रन्थिमन्तर्दधेद्ध्रुवम् ॥ १४१ ॥

इति श्रीवैद्यकालिदासविरचितायां वैद्यमनोरमायामक्षिकर्णव्रणग्रन्थिचिकित्साधिकारो नाम षोडशः पटलः ।

---

## अपच्यर्बुदचिकित्साधिकारो नाम सप्तदशः पटलः ।

अपच्यर्बुदयोः पूर्वं रक्तं हृत्वा जलौकसा ।
शरपुङ्खाशिफां लिम्पेज्ज्येष्ठाम्भोभिः सुपेषिताम् ॥ १ ॥
चिञ्चापत्ररसैश्चिञ्चाशलाकां परिपेषिताम् ।
कंसद्वयेन संघृष्टां गतिनाशाय योजयेत् ॥ २ ॥
ताम्बूलघ्राण(?)मरिचवचाधात्रीरसोनकैः ।
दुग्धे क्षीरिशिफातुल्यैः सिद्धं तैलं गतिं नुदेत् ॥ ३ ॥
अजापुरीषवल्मीकमृदश्वत्थजलैः कृतः ।
प्रलेपः पातयत्याशु चर्मकीलं दशाहतः ॥ ४ ॥
अजापुरीषवल्मीके फल्गुपुष्पोद्भवस्तथा ।
विकस्यैकं क्षिपेच्चर्मकीलनुत् शूलरूपकः (?) ॥ ५ ॥
रन्ध्रं कृत्वा लोष्टमध्ये कर्णे कमलतन्तुना ।
बद्धं हरेद्द्राविलका(?)मथवा कर्णकर्णिकाम् ॥ ६ ॥
वारिमज्जनमृतस्य विग्रहं तिन्तिणीदलरसेन सेचितम् ।
आतपे धृतमथास्य चेन्द्रियेष्वाशु जीवितमवाप्नुयाद्ध्रुवम् ॥७॥

कृष्णाष्टमीनिशायां पङ्कजमूलात्तमृत्तिकान्तःस्थम् ।
कन्दं तमसि सुपिष्टं निद्रां कुरुतेऽञ्जनात् सायम् ॥ ८ ॥
महान्धकारं स्मृत्वा तु यः शेते भुवि मानवः ।
कुम्भकर्णोऽपि तस्याशु भ्रष्टाङ्गुलिरभूद्ध्रुवम् ॥ ९ ॥
निद्रां करोत्यनिद्राणां प्रदोषे शिरसा धृता ।
उपोदिका कपोतायाः शिफा वाऽथ धृता तथा ॥ १० ॥
हरितालवचाकुष्ठचूर्णं पीतवटच्छदम् ।
अद्भिः पिष्ट्वा मुखे लिम्पेद्व्यङ्गलोपनलोलुपः ॥ ११ ॥
आजेन पयसा पिष्टामारण्यतुलसीशिफाम् ।
आलिप्योद्वर्तयेद्वक्त्रं व्यङ्गलोपमना नरः ॥ १२ ॥
तैलं कषायकल्काभ्यां मुण्डिन्याः साधितं नसि ।
कुचयोः पतनं दत्तं पीतं च विनिवर्तयेत् ॥ १३ ॥
सिद्धेन तिलजेनाक्ता स्वरसे जातिलम्बयोः ।
धृता योनिमुखे वर्तिर्नष्टावुद्वर्धयेत् कुचौ ॥ १४ ॥
उद्धृत्यार्कक्षीरसेकं प्रकुर्यात् पादे विद्धं कण्टकं कण्टकेन ।
रात्रौ कन्यामग्नितप्तां घृताक्तां बध्नीयाद्राक् स्वास्थ्यमिच्छन्मनुष्यः ।
तदनु कण्टकवेधसमुद्भवां विकृतिमाशु निहन्ति निशाग्रतः ।
तपनतप्ततिलोद्भवबिन्दुना लवणमामयदेशसमर्पितम् ॥ १६ ॥
अङ्कोलजातानि बीजानि पिष्ट्वा यः काकमाचीरसेनैव लिम्पेत् ।
कण्डूतिमिच्छन् विजेतुं मनुष्यस्तां चापि जित्वा सुवर्णं लभेत १७
तिलसंभवसंमिश्रा पर्णमषी कुमुदजम्बूचिञ्चानाम् ।
एकैकमग्निजनितं व्रणमचिरेणैव नाशयति ॥ १८ ॥
निष्पावस्य च रागो महिषीक्षीरस्य तिमिरसंकाशम् ।
व्रणमाशुशुक्षणिभवं रोपयति विदूरविकिरणाच्च (?) ॥ १९ ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायामपच्यर्बुदचिकित्सा-
धिकारो नाम सप्तदशः पटलः ।

## अथ गुह्यरोगचिकित्साधिकारो नामा-
## ष्टादशः पटलः।

वृषणभवशोफशान्त्यै बृहतीपुष्पोद्भवस्वेदम्।
कृत्वा विस्राव्य जलं तिलकल्कं घृतयुतं लिम्पेत् ॥ १ ॥
लिप्तं साज्यं वराभस्म लिङ्गलूताविनाशनम्।
करवीरस्य मूलं वा लिप्तमाज्येन कल्कितम् ॥ २ ॥
कार्पासस्यास्थिभिः पिष्टैः साधितं तिलसंभवम्।
लिङ्गलूताविकाराणां प्रतीकारो विलेपनात् ॥ ३ ॥
सेव्याब्देन्दीवराम्भोजफलविश्वौषधैः शृतम्।
तैलं योनेर्हरेत्तांस्तान् रोगान् कामुकगर्हितान् ॥ ४ ॥
तैलं प्रियङ्गुजातीपुष्पैः सिद्धं स्मरालये लिम्पेत्।
तेन विनिवृत्तगर्भदोषं सुभगं भगं भवेत्सद्यः ॥ ५ ॥
क्षौद्रेण पौष्करं रेणुमेकविंशतिवासरान्।
लिह्याच्च देहदौर्गन्ध्यं नश्येन्निःशेषमङ्गिनाम् ॥ ६ ॥
द्विनिशातिलरुग्राजीकल्कोद्वर्तितविग्रहः।
यः स्नाति तस्य देहः स्यात् सुगन्धिर्भास्करच्छविः ॥७॥
तण्डुलकण्डनलुलितैर्लशुनवरासर्षपैः कृतो धूपः।
कन्दर्पराजधान्यास्तोदं द्रागेव जयति रमणीनाम् ॥ ८ ॥
तप्ते द्विनिष्कभुजगे पारदनिष्कं निधाय संमिलितम्।
पिष्टं क्षौद्रेण जयेद्योनिफलं लिप्तमर्बुदादींश्च ॥ ९ ॥
लोध्रामलकहरिद्राहरीतकीखदिरसारसंभूतः।
क्वाथः शौचेन रवेर्वारे स्याद्योनिरोगहरः ॥ १० ॥
ब्रह्मदण्डीदलैः क्षौद्रसहितैः स्मरमन्दिरम्।
लिप्तमात्यन्तिकं नृणां सुस्नेहमावहेद्रतौ ॥ ११ ॥
भूमिकदम्बस्वरसः सक्षौद्रः शर्करासमायुक्तः।
योनौ नाभ्यां लिप्तः प्रियमचिराद्दासवत् कुरुते ॥ १२ ॥

मालतीपुष्पसंसिद्धतैलाभ्यक्तवराङ्गया ।
किङ्करीक्रियते नार्या संभोगसमये पतिः ॥ १३ ॥
रोचनालक्ष्मणामूलकल्कलिप्ततनुर्वधूः ।
रतौ प्राप्नोति सौभाग्यं दयितप्रियतामपि ॥ १४ ॥
निधाय सार्तवे योनौ रूप्यष्टी दिवसत्रयम् ।
ततः स्वमूत्रैः संपिष्य वश्यायान्नादिषु क्षिपेत् ॥ १५ ॥
चूर्णेनाञ्जनमलयजसरसिजदलरोचनाप्रियङ्गूनाम् ।
अञ्जितदृष्टिस्तरुणीं यां पश्येत् सा भवेद्वश्या ॥ १६ ॥
यैः कश्चिद्रक्तपुष्पैस्तु पञ्चभिः समिङ्गुभिः ।
लिप्तलिङ्गो वशे कुर्यान्नारीं सौभाग्यगर्विताम् ॥ १७ ॥
पारावतस्य विष्ठाभिर्मधुना सैन्धवेन च ।
आलिप्तसाधनः कान्तां स्ववश्यां कुरुते रतौ ॥ १८ ॥
तुरङ्गगन्धामञ्जिष्ठापत्रजातीप्रसूनकैः ।
मकरध्वज एव स्यात् समालिप्तनिजध्वजः ॥ १९ ॥

मण्डूकपर्णीरसमूर्च्छितं तु लिप्तं ध्वजे पारदमातनोति ।
ध्वजोद्धतिं योनिनिवेशमात्रे रामामनभीणनमोहनं च ॥२०॥
युक्तं रसं पारदशर्कराभ्यां भुवः कदम्बस्य विलेप्य लिङ्गे ।
रतेन नारीं स्ववशां करोति नारी च यान्यं नरमिच्छतीह ॥

मुखभवजलयुक्तं भूमिसर्पोत्थितं य-
न्मसृणतरसुचूर्णं पिच्छनाले स्थितं तत् ।
सुरतिसमयकाले नाभियुक्तं निरुन्ध्या-
द्विविधमधुररागैः प्रेरितं चाशु बीजम् ॥ २२ ॥

सितेषुपुङ्खिकामूलं केवलं वदने धृतम् ।
तुषाम्बुपिष्टं लिप्तं च शुक्रं संस्तम्भयेद्रतौ ॥ २३ ॥
मधुपिष्टैर्ध्वजलेपो राजतरुमरिचकपित्थवटनिर्यासैः ।
रम्भाफलाम्बुकलितैर्वशयेच्च द्रावयेच्च वनितां वै ॥ २४ ॥

शारदसितेषुपुङ्खामूलाभ्यां नक्तमालफलकाभ्याम् ।
वदनगताभ्यां बीजं भवति नृणां स्तम्भितं दीर्घम् ॥ २५ ॥
नील्या दीर्घेण पत्रेण वङ्कगेण निरुध्यते ।
रेतः श्वेतस्य मूलेन नाभिलिप्तेन वा चिरम् ॥ २६ ॥
सितवायसजङ्घाया मूलं मध्वब्जकेसरम् ।
पिष्टानि नाभिलिप्तानि रेतःस्तम्भं वितन्वते ॥ २७ ॥
दुस्पर्शोपणकुष्ठजीरकबला दग्ध्वा पुटे वारिणा
पिष्ट्वा कोलमितां सुगुटिकां कृत्वाऽथ तां शोषयेत् ।
नाभौ सा मधुकल्किता विनिहिता रत्युत्सवाडम्बर-
प्रारम्भेष्ववसानकालविकलं कुर्यान्नरं निश्चितम् ॥ २८ ॥

इति श्रीकालिदासवैद्यविरचितायां वैद्यमनोरमायां गुह्यरोगचिकित्सा-
धिकारो नामाष्टादशः पटलः ।

---

## अथ विषचिकित्साधिकारो नामैकोनविंश-
## तितमः पटलः ।

दूतमुखोत्थितवर्णान् द्विगुणीकृत्य त्रिभिर्हरेद्भागम् ।
एकद्वयेन जीवेद्दष्टो म्रियतेऽथ शून्येन ॥ १ ॥
चन्द्रमार्गगतो वायुर्दूतस्तन्मुखमागतः ।
तदा जानीहि दष्टस्य जीवितं मृतिरन्यथा ॥ २ ॥
अग्निनिर्ऋतिदिक्स्थः पृच्छति दूतो भुजङ्गदष्टस्य ।
अन्तकनिवासवासः प्रत्यासन्नो भवेत्तस्य ॥ ३ ॥
विद्धि महादिशि दूते स्थितवति दर्वीकरेण दष्ट इति ।
विदिशि तु मण्डलिनाऽदंशि दिशोर्मध्ये तु राजिलेनैव ॥४॥
पृष्टा यदि वामाङ्गे स्थितः स्त्रिया दष्टकं तमवगच्छेत् ।
अन्यतरेण तु पुंसा द्वितयेन नपुंसकेन सर्पेण ॥ ५ ॥
दूतस्य मन्त्रिणो वा वहेदिडापिङ्गलाद्वयं वायुः ।
स्त्रीपुन्नपुंसकैस्तैः क्रमेण दष्टं विजानीयात् ॥ ६ ॥

जीर्णदेवकुलवृक्षकोटरे वंशमूलमृतकाननेऽहयः ।
ये वसन्ति विविधा हि गह्वरे ते भवन्ति जनमृत्युकारणम् ॥
सिन्धुसङ्गतिषु पादपे बिले द्वीपकूपकुलिशेषु शिग्रुषु ।
वेत्रपत्रगहने चतुष्पथे व्यापदे भवति पन्नगो दशन् ॥ ८ ॥
गुलिकस्योदयकाले(?)यो यो वारेषु मन्त्रिभिः कथितः ।
तस्मिन् फणिदष्टस्य प्रतिकारविधिर्न भवेज्जातु ॥ ९ ॥
पूर्वस्मिन् दक्षिणे वामे पृष्ठे स्ववपुषः क्रमात् ।
भागे दशन्ति भुजगा द्विजात्याद्यन्वयोद्भवाः ॥ १० ॥
एकोऽथवा त्रयो वा दंशा बहुवेदनाः स्रवद्रुधिराः ।
काकाङ्घ्रिचक्रकूर्माकाराश्च नयन्ति यमसदनम् ॥ ११ ॥
भ्रूमध्ये त्रिकवक्षस्स्तनोष्ठतालुहृदयनाभिगले ।
शङ्खयुगचिबुककुक्षिस्कन्धशिरस्तालुमूलफलगुदेषु ॥ १२ ॥
कक्षे सन्धिषु नृणां स्याद्यदि दंशा भुजङ्गदशनकृताः ।
तमसाध्यविषं प्राहुर्मन्त्रध्यानौषधादीनाम् ॥ १३ ॥
नखेष्वधरयोर्हस्ततलयोरपि नीलिमा ।
दृश्यते यत्र तं मन्त्री मृतमेवाध्यवस्यतु ॥ १४ ॥
देहेऽप्यसाधनस्पर्शे कृतेऽप्यङ्गं न कम्पते ।
यस्य जीवयितुं तं न प्रभवेदपि पक्षिराट् ॥ १५ ॥
प्रतिमां स्वामादर्शे सलिले वा नावलोकेत ।
घ्राणाग्रं भ्रूमध्यं दष्टो यः स क्षणान्म्रियते ॥ १६ ॥
नखाग्रभागेषु नखान्तरे वा प्रपीडनं वेत्ति न योऽहिदष्टः ।
यो हस्तरुद्धश्रुतियुग्मरन्ध्रो नादं नितान्तं शृणुयान्महान्तम् ॥
ज्वलनदीपशिखेन्दुदिवाकरान् यदि न पश्यति भोगिविषार्दितः ।
स्वकरमूर्धजसंचयलुञ्चनः स च यमालयमाविशति ध्रुवम् ॥१८॥
स्वरैः षोडशभिर्जप्तं (?) वार्यन्तर्यदि गच्छति ।
दष्टस्य यस्य तस्य स्याज्जीवितं मृतिरन्यथा ॥ १९ ॥

दंशस्योपरि सहसा ज्वलनं चतुरङ्गुले प्रयुञ्जीत ।
तस्याचूषणमथवा प्रोतान्तरितस्य विदधीत ॥ २० ॥
विषं जयेत् स्थावरजङ्गमानां छर्द्या विरेकेण च शोधितस्य ।
नस्याञ्जनालेपनपानयोगैः सेव्यादिना रात्रियुगादिना च ॥२१॥
दन्ताद्घ्राणादक्ष्णोर्देहाद्वा दंशदेशमात्रेण ।
लिम्पेन्मलेन च ततो नातिक्रामेद्विषं दंशात् ॥ २२ ॥
आस्याम्बुसमुपेतेन मलेन श्रोत्रजन्मना ।
सद्यो लेपाद्विषं दंशान्नातिक्रामति जातुचित् ॥ २३ ॥
कृतव्रणे नखाग्रेण दंशे दन्तमलेन वा ।
विशाखां मर्दयेत् सर्वविषघ्नामथ भक्षयेत् ॥ २४ ॥
सद्यो लोहादिभिस्तप्तैर्ज्वलनज्वालयाऽथवा ।
दंशदेशे तु दष्टस्य दाहो विषविकारजित् ॥ २५ ॥
क्षां क्षीं क्षुं क्षैः क्षौः क्षः संजप्य वारिभिर्मुहुः सेकात् ।
दष्टमनुष्यस्य स्यान्निर्विषता तु क्षणेनैव ॥ २६ ॥
ओं सुवर्णरेखे कुक्कुटविहगरूपि स्वाहा ।
विद्या सुवर्णरेखेयमेतज्जपितवारिणा ॥ २७ ॥
दष्टस्याङ्गसमासेकः कृतः स्याद्विषवेगजित् ।
वामहस्ते स्वरैश्चन्द्रमण्डलेन च वेष्टितम् ॥ २८ ॥
अमलं शङ्करं ध्यायेत् स्रवन्तममृतं मुहुः ।
तेन हस्तेन संस्पृष्टं भस्मवार्यौषधादिकम् ॥ २९ ॥
विकीर्णं द्रागपाकुर्याद्विषरोगग्रहादिकान् ॥ $\frac{१}{२}$ ॥
न्यस्य वकारं शीर्षे वर्षन्तं श्वेतममृतधाराभिः ।
स्नपयन्तं सकलतनुं संपूर्णं शशधरं पुनर्हृदये ॥ ३० ॥
चिन्तयति पूर्णमेवं विषनिर्णाशं समुपयाति ।
क्षणमात्रादपि लोके भूतग्रहडाकिनीदोषाः ॥ ३१ ॥
लवणार्धपलोपेतश्चिञ्चापल्लवजो रसः ।

कुडवप्रमितः पीतो विषं हन्ति फणाभृताम् ॥ ३२ ॥
अन्नैर्हिङ्गूपेतैः सुरदाल्याश्चूर्णितैः शकलैः ।
दत्तं नस्यं त्रिदिनात् सर्पविषध्वान्तमार्तण्डः ॥ ३३ ॥
अपनयति घातकहस्तः परिभावितो बहून् वारान् ।
फणिवल्लीदलसलिलैः सकलं गरलं न सन्देहः ॥ ३४ ॥
तदहर्जवत्सशकृता तगरेणापि प्रवर्तिता वर्तिः ।
नृजलेन कल्किता स्याद्विषहृन्नस्यादिषु विकीर्णा ॥ ३५ ॥
व्योषनवनीतदधिमधुसिन्धूत्थमधूकवृक्षसाराणाम् ।
उपयोगाद्दासुकिना दष्टोऽपि भवेत् क्षणादविषः ॥ ३६ ॥
भूनागं मरिचं हिङ्गु लवणं केसरास्थि च ।
नृजलेनैव नस्याद्यैः सर्पादिविषनाशनम् ॥ ३७ ॥
काकमाचीरसेनैव रसोनमरिचौ भिषक् ।
पिष्ट्वा नस्याञ्जनालेपैरहेर्विषमपोहति ॥ ३८ ॥
विश्वेन स्फोतमूलं तु श्वेतार्कक्षीरभावितम् ।
नृजले नस्ययोगेन बोधयेद्देहिनं मृतम् ॥ ३९ ॥
अग्निमन्थमधूकसारहरितमञ्जरीमूलरु-
ञ्जाणिमन्थमथाशु गोपयसा विलिप्य तमापिबेत् ।
नासिकाङ्घ्रिकृकाटिकाहृदयोरुचूतपालिकान् (?)
बिन्दुषट्कबिडालमूषिकजं विषं विनिवारयेत् ॥ ४० ॥
संचूर्ण्य वस्त्रबद्धं केसरपुष्पं च त्रिकटुं च ।
वृश्चिकविद्धे देशे तिलजयुतं स्वेदितं जयेत्तोदम् ॥ ४१ ॥
दिवसकरदुग्धतुल्यं तीक्ष्णतरचूर्णमाशु संलिप्तम् ।
घनरव इव नागकुलं वृश्चिकविषमाशु नाशयति ॥ ४२ ॥
हरति वृश्चिकजं विषमञ्जसा लवणनागबलान्वितलेपनम् ।
मदनमाशु यथा रतिवल्लभं हरललाटदृगुत्थितपावकः ॥ ४३ ॥

ताम्बूलं गोमयोपेतं भक्षयेद्वृश्चिकातुरः ।
सहसैव तु तद्व्याधिर्नाशं याति न संशयः ॥ ४४ ॥
विशुद्धवारनक्षत्रे गृहीता काश्मरीशिफा ।
दूर्वासहस्रं तत्स्पर्शो दंशं वृश्चिकजं जयेत् ॥ ४५ ॥
शीता वृश्चिकविद्धस्य स्विद्यते कम्पते तनुः ।
सदा वाञ्छति रौद्रं च रेतश्च स्रवति क्षणात् ॥ ४६ ॥
निर्गुण्ड्यर्कदलैः क्षुण्णैः सकरीषैर्विपाचितैः ।
ऊष्मस्वेदो हितस्तस्य वचालवणनागरैः ॥ ४७ ॥
साहिगन्धैः सतक्रैश्च सुपिष्टैः स्वेदयेत् पुनः ।
संपाययेद्भिषक् तं च मर्दयेत् कोष्णभस्मना ॥ ४८ ॥
सुखीभवेद्विपक्वैश्च भोजनैस्त्रिदिनान्तरम् ॥ १/२ ॥
उपानत्प्रहारो मयूरप्रलेपो विषं हन्त्यलर्कोद्भवं सद्य एव ।
तथा सर्पिषा चाशु कोष्णेन सेकस्त्वलर्कारिपत्रोपनाहश्च रात्रौ॥
घननादशिफा पिष्टा पीता तण्डुलवारिणा ।
प्रणाशयेद्धृतोपेता निखिलं कृत्रिमं विषम् ॥ ५० ॥
वराग्रूढकृतः स्वेदो दंशे श्वविषनाशनः ॥ १/२ ॥
आढकार्धवसुभागपेषितं नालिकेरफलवल्कलोदकम् ।
आखुसंभवविषं विनाशयेत्तिन्तिणीकमिव साम्लकाञ्जिकम् ५१
अलर्कस्वरसं प्रातस्तैलयुक्तं दिनत्रयम् ।
यः पिबेन्मौषिकी बाधा तस्य जन्मान्तरेऽपि न ॥ ५२ ॥
बहलं प्रलिप्य सर्पिः क्षणमभितः सपदि दष्टवत्याखौ ।
मार्जारेण त्रिदिनं त्रिसन्ध्यमवलेहयेन्मतिमान् ॥ ५३ ॥
प्रलेपः स्यात्तु वातारिशाल्मलीक्वथितैर्जलैः ।
गैरिकद्विनिशाभिर्वा नखदन्तविषे हितः ॥ ५४ ॥
रक्तपुच्छफलालिकानिशितितिन्तिणीसहितोदन-
स्पर्शमापदमाशु निर्विषमं भवेदथवाक्षतम् (?) ।

भुक्तवानथ ऊर्ध्वमप्यतिसार्यते हतसंज्ञक-
स्तं भिषग्घननादवारिजलेपनैः परिपालयेत् ॥ ५५ ॥
लीढः क्षौद्रसितायुक्तश्चूर्णस्ताम्रसुवर्णयोः ।
स्यात् स्थावरविषध्वान्तसन्तानैकदिवाकरः ॥ ५६ ॥
तिलमद्यदिवास्वप्नव्यायामातपमैथुनम् ।
कोपं तैलं कुलत्थांश्च विषार्तो वर्जयेत्सदा ॥ ५७ ॥

इति श्रीवैद्यकालिदासविरचितायां वैद्यमनोरमायां विषचिकित्साधिकारो नामैकोनविंशतितमः पटलः ।

---

## अथ रसायनवाजीकरणाधिकारो नाम विंशतितमः पटलः ।

मम सत्यप्रतिज्ञेयं यूयं शृणुत पण्डिताः ।
पथ्यायाः सदृशं किञ्चित् कुत्रचिन्नैव विद्यते ॥ १ ॥
पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।
यदि मनसा वचसा वा द्रुह्यति नित्यं न भूतेभ्यः ॥ २ ॥
त्रिफलाभोजिनः पुंसः पथ्यान्नमितभोजिनः ।
रोगा भवन्ति निर्वीर्या विप्रा इव निरग्नयः ॥ ३ ॥
वृक्षे शाल्मलिजे रन्ध्रं कृत्वा दत्त्वा हरीतकीम् ।
आदाय भक्षयेन्मासात् क्षीराशी विजरो भवेत् ॥ ४ ॥
आमलकीफलचूर्णं क्षौद्रेणाज्येन वा सायम् ।
लीढं नासादृक्श्रुतियौवनबुद्ध्यग्निसंजननम् ॥ ५ ॥
चूर्णं धात्र्यभयाक्षाणां नीलीं वा नलदानपि ।
लीढ्वा कालेषु नीरोगी हविर्गुडमधुक्रमात् ॥ ६ ॥
पथ्याधात्रीमुस्तकविडङ्गलोहाग्नयः क्रमाद्वृद्धाः ।
चूर्णीभूता लीढाः क्षौद्रेण समस्तरोगहराः ॥ ७ ॥
प्रातःकाले धात्रीं भुक्त्वा पथ्यां रात्रौ चाक्षं नित्यम् ।
खादन् सर्वान् व्याधीन् जित्वा जीवेत्सूर्यो यावच्चेन्दुः ॥ ८ ॥

लौहे पात्रे लिप्तां पथ्यां लीढ्वाऽन्येद्युः सर्पिःक्षौद्रम् ।
व्याधीन् जित्वा स्थायीकुर्यान्नित्यं देहं निःसन्देहम् ॥ ९ ॥
माधवमधुगुडसैन्धवसितोपलानागरैः पृथक् पथ्या ।
शिशिरादिष्वभ्यस्ता व्याधिचयं विजयते नृणाम् ॥ १० ॥
कुष्ठचूर्णं समध्वाज्यं प्रत्यूषे प्रपिबेन्नरः ।
सुगन्धो रूपसंपन्नश्चिरं जीवेदनामयः ॥ ११ ॥
मुस्ताहपुषयोश्चूर्णं पयसा सह यः पिबेत् ।
सघृतं तस्य देहः स्याद्युवभावमनोहरः ॥ १२ ॥
पथ्याशुण्ठ्योश्च यच्चूर्णं प्रभाते मधुसर्पिषा ।
लीढं रसायनं श्रेष्ठं वलीपलितनाशनम् ॥ १३ ॥
शुण्ठीसितोपलासिन्धुगुडक्षौद्रकणायुता ।
हिमादिषु पृथक् पथ्या सेविता स्याद्रसायनी ॥ १४ ॥
तिलधात्रीफलचूर्णं समधुघृतं प्रतिदिनं प्रगे लीढम् ।
जनयेन्मासेन मतिं महतीं हन्याज्जरां च पराम् ॥ १५ ॥
प्रातः प्रातर्नसा पीतं वारि हन्ति जरागमम् ।
कासं श्वासं वलिं व्यङ्गं पालित्यं तिमिरं तथा ॥ १६ ॥
उदकं शाल्मलीमूलाद्व्रणिताद्गलितं घटे ।
शोषितं सतिलं खादेत् केवलं वा वृषायते ॥ १७ ॥
स्वप्याद्वामेन पार्श्वेन रात्रौ वाञ्छन् सुखायुषी ।
उत्तिष्ठेत्तु ततः प्रातः शयनाद्दक्षिणेन च ॥ १८ ॥
पिप्पलस्य शृतं मूलफलपल्लववल्कलैः ।
क्षीरं घृतसितोपेतं पीतं रेतोविवर्धनम् ॥ १९ ॥
श्वेतगिरिकर्णिकायाः पत्रं पयसा विपक्वमश्नीयात् ।
प्रातर्नरोऽङ्गनानां शतमपि गच्छेदपूर्ववद्रात्रौ ॥ २० ॥
माषाक्षताश्वगन्धातिलमुसलीनां क्रमेण भागाः स्युः ।
सप्त नवैकैकं द्वे सर्पिषः पाचिताः परं वृष्याः ॥ २१ ॥

दशगुणदुग्धे सिद्धं शतावरीरसे घृतं प्राश्नन् ।
मधुमागधिकासहितं सशर्करं भवति रतिमल्लः ॥ २२ ॥

कुम्भे निधाय शकलीकृतमूरुपूर्णं
तत्रैव शाल्मलिजटागलितोदकेन ।
संभावितं दिनमुखे च रतौ च खादन्
वृद्धो भवेत् सुरतनाटकचक्रवर्ती ॥ २३ ॥

अधुना शिवपादसेवकेन[1] पृथगेषा सकलागमार्थरूपा ।
रचिता भिषजां मनोरमा जनुषां रोगसमाप्तये समाप्ता ॥२४॥

इति श्रीवैद्यकालिदासविरचितायां समस्तायुर्वेदार्थरूपायां वैद्यमनोरमायां रसायनवाजीकरणाधिकारो नाम विंशतितमः पटलः ॥

---

इति वैद्यमनोरमा समाप्ता ।

---

१ 'शिवपादशेखरेण' इति पाठान्तरम् ।

# धाराकल्पः ।

---

## मङ्गलाचरणम् ।

अनन्तकल्याणगुणैकभाजनं निरन्तरानन्दचिदेकविग्रहम् ।
अनन्तरायेप्सितसिद्धये वयं तमेकदन्तं सततं भजामहे ॥ १ ॥

### स्नेहधारागुणाः ।

धातूनां दृढतां करोति वृषतां देहाग्निवर्णौजसां
स्थैर्यं पाटवमिन्द्रियस्य जरसो मान्द्यं चिरञ्जीवितम् ।
अस्थ्नां भङ्गमपाकरोति नितरां दोषान् समीरादिकान्
सर्वस्नेहकृता सुखोष्णसुभगा सर्वाङ्गधारा नृणाम् ॥ २ ॥

### सेचनविधौ द्रोणीकरणयोग्या वृक्षाः ।

प्लक्षोदुम्बरगन्धसारवरुणन्यग्रोधदेवद्रुमाः
पुन्नागाह्वकपित्थचोचवकुलाशोकासनाम्रास्तथा ।
डोलाचम्पकबिल्वनिम्बखदिरामोघाग्निमन्थार्जुना
इत्याद्यन्यतमेन सेचनविधौ द्रोणीं प्रकुर्याद्बुधः ॥ ३ ॥

### द्रोणीप्रमाणम् ।

द्रोणी हस्तचतुष्कदीर्घकरमात्रव्याससतत्पादमा-
त्रोद्यद्भित्तियुता दृढा समतला पादान्तरन्ध्रा बहिः ।
शीर्षस्थान इहोन्नतैककरमात्रोत्तानविस्तारका
निम्ना किञ्चन मध्यतश्च चरणैर्हस्तैश्च युक्ता दृढैः ॥ ४ ॥

---

१ 'कल्याणं मङ्गलं शुभम्' इत्यमरः। २ 'अप्येकदन्तहेरम्बलम्बोदरगजाननाः' इत्यमरः। ३ गन्धसारश्चन्दनः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः। ४ 'मत्रायाम' इति पा०।

### धारासेचनविधिः ।

एवं मारुतहारिभिश्च तरुभिर्द्रोणीं विधायादरा-
देवं चेभमुखं[1] द्विजानपि भिषग्वृद्धान् प्रपूज्यातिथीन् ।
पूर्वाह्णे दिवसे शुभेऽतिमहिते लग्ने शयानस्य त-
द्द्रोण्यां सेचनमाचरेत् पटुमतिर्द्रव्यैर्यथोक्तैर्भिषक् ॥ ५ ॥

### सेचनार्थं कलशविधानम् ।

स्वर्णाद्युत्तमलोहजस्तु करको[2] मृत्संभवो वाऽत्र त-
न्नालाग्रं तु कनिष्ठिकाङ्गुलिपरीणाहोन्मितं रोगिणः ।
द्विप्रस्थप्रमितो विधेय इति, वा मध्यस्थरन्ध्रादधो
गच्छद्वर्तिरथोर्ध्वलम्ब्यपि घटः कार्यः शिरःसेचने ॥ ६ ॥

### सेचनविधौ योग्याः परिचारकाः सेचनविधिश्च ।

ग्राह्यास्ते परिचारकाः स्युरनुरक्ताः सावधानाः शुभा
ये, तद्धस्तदृढावलम्बनवशात्तत्पात्रपातादितः ।
भीतिर्जातुचिदातुरस्य तु यथा न स्यात्तथा कारये-
द्धारां मूर्धनि हस्तयोरपि पृथग्वक्षःस्थले पादयोः ॥ ७ ॥
यद्वा हस्ततलप्रपूर्णपिचुना सेकं क्वचित्कारये-

### दोषविशेषे योज्याः स्नेहाः ।

द्योज्यं स्नेहचतुष्टयं[3] च तिलजं वा तत्र शुद्धेऽनिले ।
पित्तेऽस्रे च घृतं, कफे तु तिलजं, वातेऽस्रपित्तान्विते
तैलाज्यं तु समं, कफेन सहिते तैलार्धभागं घृतम् ॥ ८ ॥

## अथ तक्रधारां विवक्षुः पूर्वं चतुर्धा मूर्धनि तैलं निर्दिशति—

अभ्यङ्गः परिषेचनं पिचुशिरोबस्ती च विद्याच्चतु-
र्भेदं मूर्धनि तैलमप्यतिगुणं चैतत्क्रमेणोत्तरम् ।

---

१ 'इभमुखं' गजाननम् । २ करकः कमण्डलुः । 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च । द्वयोर्मेघे जले न स्त्री करकश्च कमण्डलौ ।' इति मेदिनी । ३ 'सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम्' इति वाग्भटः ।

अभ्यङ्गो विनिहन्ति रौक्ष्यमपि कण्डूं, दाहशोफव्रण-
क्लेदादीन् परिषेचनं, पिचु कचस्फोटादि, चान्सोऽनिलम् ॥

तक्रधाराविधानम् ।

धारायास्त्वेकवर्षातपहिमपरिशोषातिशुद्धप्रकीर्णं
धात्रीप्रस्थं सपादं भिषगथ पटुधीः संत्यजेद्बीजमस्याः ।
उत्क्वाथ्याष्टादशाख्यामितकुडवजले षष्ठभागावशिष्टं
तत्तुल्यं चाऽम्लतक्रं विधिरिति मुनिभिः प्रोक्त आत्रेयमुख्यैः॥

धारायोग्यपात्राणि ।

धारायां स्फटिकप्रवर्णरजतप्लक्षादिपूर्वोक्तव-
क्षायस्ताम्रवराटिकाप्रथितमृत्पात्रं त्वतीवोत्तमम् ।
केचिद्रोगिकनिष्ठिकान्तविवरं शंसन्ति केचित्तु वा
तत्पर्वोपमविस्तृतं तु सुषिरं पात्रस्य मध्ये कृतम् ॥ ११ ॥

सेचनविधेः पश्चात्कर्म ।

धारायाश्चावसाने निजगदशमनप्रोक्तसर्पिश्च सेव्यं
तत्काले चावसंस्थः कथमपि वसतु प्रीतिमानेष रोगी ।
कायक्लेशानशेषान्मनसि सुखहरान्वक्त्रजिह्वासुखार्दी-
स्त्यक्त्वा पाटीरशुद्धाम्बरविधृतवपुर्ब्रह्मविज्ञानितुल्यः ॥१२॥

तक्रधारासेचनगुणाः ।

केशादीनां च शौक्ल्यं क्लममपि तनुतां दोषकोपं शिरोरु-
ग्बाधामोजःक्षयं तत्करचरणपरिस्फोटनं मूत्रदोषम् ।
सन्धीनां विश्लथत्वं हृदयरुगरुची जाठराग्नेश्च मान्द्यं
धात्रीतक्रोत्थधारा हरति शिरसि वा कर्णनेत्रामयौघम् ॥१३॥

घृततैलधारासेचनगुणाः ।

स्थैर्यं वाङ्मनसोः शरीरबलमप्याहारकाङ्क्षा धृति-
र्माधुर्यं वचसस्त्वचोऽपि मृदुता नेत्रे प्रकाशोऽगदः ।

---

१ 'द्विगुणिते वारिणि शृतात्क्षीराज्जातं तक्रं' इति क्रमः केरळेषु ।

शुक्रास्रक्परिपोषणं रतरतिर्दीर्घायुरल्पोष्णता
सुस्वप्नं घृततैलसेचनगुणेनाऽस्तीह जाग्रत्सुखम् ॥ १४ ॥

अथ स्नेहस्वेदः ।

तत्तव्द्याधिशमोदितौषधिगणैः सिद्धं च वा योजयेत्
स्वस्थेऽभ्यञ्जनसेचनादिषु सदा तैलाज्यसंमिश्रितम् ।
एकाहान्तरमेव वा प्रतिदिनं पूर्णे चले मध्यमे
त्यक्त्वा द्वित्रिदिनं चतुर्दिनमथोद्याल्पेऽत्र षट् पञ्च वा ॥१५॥
पित्ते कोष्णमथोष्णमेव विहितं शुद्धे समीरामये
तत्स्नेहं द्रवमात्रमेव कफयुक्ते रक्तपित्तेऽपि च ।
ऊर्ध्वाङ्गे तु सुशीतमेव विहितं सिञ्चेदविच्छिन्नमे-
वात्यर्थोच्चविलम्बितद्रुतनतं कुत्रापि नैवाचरेत् ॥ १६ ॥

सेचनकालप्रमाणम् ।

रूक्षे पित्तयुतेऽनिले च परमः कालो मुहूर्तद्वयं
सार्धं तत्र, तदर्धमात्र उदितः स्निग्धे कफोन्मिश्रिते ।
यावत्स्वेदसमुद्भवो भवति तत्तावन्निवर्तेत वा,
स्नेहोऽत्र त्रिभिरेति रोमविवरं मात्राशतेन क्रमात् ॥१७॥
सप्तापि त्वच एति सप्तभिरथो षड्भिस्तथाऽस्रादिकान्
षड्धातूनिषुसिन्धुदिग्ग्रहमिता मात्रा मुहूर्तो भवेत् ।

सेचनविधौ धारोच्चतायाः प्रमाणम् ।

धारोच्चं चतुरङ्गुलं तु शिरसः सेके तदन्यत्र त-
त्प्रोक्तं तत्त्रिगुणं च मन्दपतनात्तद्रोगवृद्धिर्भवेत् ॥ १८ ॥

अविधिधाराकरणदोषास्तच्चिकित्सा च ।

अत्युच्चद्रुतभूरिकालपरिषेकाद्दाहवीसर्परु-
ङ्मूर्च्छाङ्गस्वरसादसन्धिदलनच्छर्द्यस्रपित्तज्वराः ।

---

१ केरळेषु 'मुक्किपिपियिच्चित्' इति प्रथिततरः कोऽपि परित्यक्तोत्तमाङ्ग-चिकित्साविशेषः ।

कोठाद्याश्च भवन्त्यतः परदिने गण्डूपनस्यादिकं
कृत्वा शुद्धमहौषधेन सुशृतं तोयं पुनः पाययेत् ॥ १९ ॥
सायाह्ने लघु भोजयेत्कटुतरं यूषान्वितं वाऽप्यथो
बस्तिं स्नेहकृतं च सैन्धवकृतं कुर्यात्तृतीयेऽहनि ।
स्नेहव्यापदि चोक्तकर्म निखिलं कुर्याच्चतुर्थेऽह्न्यतः
प्राग्वत्स्नेहनिषेवणं च विधिवत्कुर्याद्दिने पञ्चमे ॥ २० ॥

सेचनविधौ क्षीरादिपरिवर्तनकालः ।

एकाहादपरं च सेचनविधौ क्षीरादिकं गृह्यते
धान्याम्लं त्रिदिनात्परं विधिरयं स्नेहस्य तु प्रायशः ।
एकेन त्रिदिनं परेण च तथा सिञ्चेत्त्र्यहं तद्द्वयं
मिश्रीकृत्य च सप्तमेऽहनि पुनस्त्यक्त्वैनमेवं चरेत् ॥२१॥

सेचनद्रव्याणां नूत्नादिभेदेन गुणदोषाः ।

यन्नूत्नेन निषेचनं प्रतिदिनं तत्तूत्तमं, मध्यमं
तेनैव त्रिदिनं, ततोऽपि च परं मिश्रीकृतं चाधमम् ।

सेचनविधावयोग्यः कालः ।

अत्युष्णेऽपि च मन्दकोपसमये मन्दातपे शीतले
कुर्यान्न त्वपराह्णकेऽपि च भिषग्रात्रौ तथा सेचनम् ॥२२॥

सेचनविधेः पश्चात्कर्म ।

सेकानन्तरमातुरस्तु शिशिराम्बुप्रोक्षणैः ष्ठीवनै-
श्चोत्क्षेपैर्मृदुमारुतैरनुगुणं विश्राम्य तत्रोत्थितः ।
मन्दं किञ्चन मर्दितोऽनु च रसैः स्नेहं कषायैस्त्यजे-
त्स्नात्वा कोष्णजलैः सुगन्धसुभगो धान्यौषधाम्भः पिबेत् ॥
पेयं वा लघु सोषणाज्यकटु तक्रं यूषयुक्तं मितं
भक्तं कोष्णमथाचरेद्विधिमतः स्नेहोक्तमत्राखिलम् ।
एवं सप्तदिनं व्यतीत्य पुनरन्येद्युर्विरेकं ततो
बस्तिं तत्र तु कारयेदिति विधिर्नासत्यसंभाषितः ॥२४॥

सेचनविधौ परिहारकालः ।

यावन्त्यौषधयोजितानि दिवसान्येतानि तावन्त्यहा-
न्यन्यान्यप्यथ सर्वकर्मसु बुधो नित्यं जितात्मा नयेत् ।

सेचनविधौ परिहार्याणि ।

स्त्रीणां स्पर्शनदर्शनस्मृतिवशाच्छुक्रे स्रुते सन्ति त-
त्संपर्केण विनाऽपि तद्भवगदास्तस्मात्त्यजेत्सर्वदा ॥ २५ ॥

व्यायामातपवेगरोधहिमधूमात्युच्चनीचोपधा-
नाहःस्वप्नरजःप्रवातचिरकालासीनताः संस्थितिम् ।
शोकं जागरपादयानगमनक्रोधातिभाष्यादिकां-
स्त्यक्त्वाऽथोष्णजलोपचार्यनतिभुक् स्याद्ब्रह्मचारी सदा ॥२६

रोगविशेषे परिषेचनविधिविशेषः ।

गुल्मानाहभगन्दरव्रणतुनीशूलाभिघातास्रवा-
तोदावर्तककोठमूढमरुदष्ठीलाविसर्पादिषु ।
प्लीहाध्मानकविद्रधिप्रतितुनीष्वेकाङ्गसेकं तथा
कुर्याद्धस्ततलप्रपूर्णपिचुना मन्दं सुखोष्णं भिषक् ॥२७॥

इति धाराकल्पः समाप्तः ।

---

# वैद्यमनोरमान्तर्गतविषयानुक्रमणिका।

## आयुर्वेदीयग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः।

**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः, तथा **रससंकेतकलिका**—कायस्थचामुण्डवैद्यविरचिता, एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते। द्वितीयं संस्करणम्, मूल्यं २ रूप्यकौ.

**गदनिग्रहः**—श्रीशोढलवैद्यविरचितः। अस्य प्रयोगखण्डात्मकः प्रथमो भागः। अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति। द्वितीयं संस्करणम्। मूल्यं २ रूप्यकौ.

**गदनिग्रहस्य द्वितीयो भागः**—कायचिकित्सा-शल्य-शालाक्य-भूततन्त्र-कौमारभृत्यागदतन्त्र-रसायन-वाजीकरण-पञ्चकर्मविध्याख्य-नवखण्डात्मकः। मूल्यं ४॥ रूप्यकाः।

**आयुर्वेदप्रकाशः**—उपाध्यायश्रीमाधवविरचितः। द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ।

**क्षेमकुतूहलः**—श्रीक्षेमशर्मविरचितः पाकशास्त्रग्रन्थः। मूल्यं १२ आणकाः।

**रसरत्नाकरान्तर्गतश्चतुर्थो रसायनखण्डः**—श्रीनित्यनाथसिद्धविरचितः। मूल्यं ८ आणकाः।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, **नाडीपरीक्षा** श्रीरावणकृता, **वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः**, एतद्ग्रन्थचतुष्टयमेकत्र बद्धमेवोपलभ्यते। द्वितीयं संस्करणम्। मूल्यं १॥ रूप्यकः।

**रसपद्धतिः**—श्रीविन्दुविरचिता, श्रीमहादेवविरचितटीकया सहिता, तथा **लोहसर्वस्वं**—श्रीसुरेश्वरविरचितम्। एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते। मूल्यं १॥ रूप्यकः।

प्रापणभृतिस्तु सर्वेषां ग्राहकैरेव देया भवेत्।

प्राप्तिस्थानम्

**वैद्य जादवजी त्रिकमजी आचार्य**

होलीचकला, फोर्ट—मुंबई.

